# प्रताप-विजयः

[किशोराणां कृते नवीनं-खण्डकाव्यम्]







प्रणेता

स्वर्गीयश्रीमदीशदत्तशास्त्री 'श्रीशः'

# प्रताप-विजयः

[ किशोराणां कृते नवीनं खण्डकाव्यम् ]



प्रणेता

स्वर्गीय श्रीमदीशदत्तशास्त्री 'श्रीशः' साहित्याचार्यः

हिन्दी अनुवादकः

शिवशङ्करत्रिपाठी

अन्वयकर्ता

श्रीगुप्तेश्वरत्रिपाठी, एम० ए०

सम्पादकः

प्रभातशास्त्री साहित्याचार्यः

प्रकाशनवर्षः

| | |
|---|---|
| १९ | ८० |
| प्रकाशकः | मुद्रकः |
| देवभाषाप्रकाशनम् | देववाणीमुद्रणालयम् |
| दारागंज-प्रयागः | दारागंज-प्रयागः |
| संवत् | २०३६ |
| मूल्यम् | ३.०० रुपये |

## सम्पादकीयम्

अप्रकाशितानामप्राप्याणां ग्रन्थानां प्रकाशनं संगमन्याश्चैरकालिकं समुद्देश्यम् । इति हेतोः तदानीन्तनकाशीसहृदयसुधीसमाजे परमप्रसिद्धानां समृद्धसंस्कृतसाहित्य रससिद्धानां कविरत्नस्वर्गीयश्रीमदीशदत्तशास्त्रिश्रीशमहोदयानामोजोभृतिः प्रताप विजयाभिधानाकृतिः प्रकाश्यते ।

संस्कृतवाङ्मयं सर्वथाऽगणितप्रकाशिताप्रकाशितग्रन्थराशिरञ्जितं वरीवर्ति । किन्तु तत्र युगानुकूलं किशोरकिशोरीणाञ्चोपयोगिसाहित्यराहित्यं संवीक्ष्य सहृदयानां वालसाहितीरसिकानाञ्चेतः नितरां चेखिद्यते । अंगुलिगणनीयानि प्रत्नानि कियन्त्येव ग्रन्थ-रत्नानि सन्ति । तानि वार्तमानिकवालशिक्षासिद्धान्तोपेक्षकाण्येव । अत एव साधारणे जने वालसमाजे च संस्कृतभाषाप्रचाराय सरलभाषानिवद्धस्य संस्कृतसाहित्यस्य महती आवश्यकता दरीदृश्यते । प्रकाशितेनानेन काव्येन तदभावपूर्तिर्भविष्यतीति विश्वसिमो वयम् ।

काव्येऽस्मिन् पदे पदे भाषासारल्यं देशभक्तिभावनाप्रावल्यं शव्दवन्धे लावण्यं यत्र तत्र देशदशावर्णने कारुण्यं दन्ध्वन्यते । इयं कविवरस्य वाल्यकालीना रचना । अतो यत्र तत्र त्रुटिर्वर्तते । कविना प्रतापविजयशीर्षके 'पूर्णाऽद्य मे भगवतः कृपयाऽभिलाषा' इत्यत्र 'अभिलाष' शव्दस्य स्त्रीलिङ्गे प्रयोगो विहितः । सः न समीचीनः । घञन्तत्वात् अभिलाषशब्दः नित्यपुंलिङ्गः । तथैव 'हल्दीघाटी-परिचयः' इति शीर्षके 'राणाप्रतापप्रतिभा प्रतिभासमाना' इत्यत्रापि वृत्तभङ्गः । स्थानद्वयेऽपि 'पूर्णोऽद्य मे भगवतः कृपयाऽभिलाषः' 'राणाप्रतापवलवीर्यविभासमाना' इति च स्वीकृत्य दोषोद्धारः । आसीदस्य काव्यस्य पूर्वसंस्करणे मुद्रणादिजनिता महती त्रुटिः । स्थले स्थले समुचितविरामचिह्नानामभावः । तेनाभवदर्थकरणे वहुभ्रान्तिः । यथामत्यस्मिन् संस्करणे दूरीकृतास्त्रुटयः । पूर्वसंस्करणे कतिपये अप्रासङ्गिका अंशा आसन् । तेषामैतिहासिकमहत्त्वं वीक्ष्य भूयोऽपि मुद्रिताः । काव्यमिदं पाठकानां कृते रुचिकरं भविष्यति । प्रपठ्य पाठकाः स्वमतं प्रेषयिष्यन्तीति विनिवेदनम् ।

प्रभातशास्त्री

समुद्धृतमिदं संगमनीपत्रिकातः 

# प्रतापविजय-विमर्शः

## विमर्शकः

अनन्तश्रीविभूषितकाशीपीठाधीश्वरब्रह्मलीनश्रीमहेश्वरानन्दसरस्वती
पूर्वाश्रमनाम सर्वतन्त्रस्वतन्त्रकविताकिकचक्रवर्तिश्रीमहादेवशास्त्री
[प्रोफेसर, ओरियण्टल कॉलेज, हिन्दूयूनिवर्सिटी वाराणसी]

●

कृत्वा धम्मिल्ललीलां गलमनुगलितां कुन्तलालिं विलोलां,
व्याधुन्वानं सटाग्रं मृगपतिमनिशं तीव्रयन्ती महोग्रा ।
मुञ्चन्ती चन्द्रहासं खलबलनिकरे सैरिभं मृद्नती द्राक्,
श्रीशक्तिर्भारतेऽस्मिन्नरि नरि विजया वस्तुतः साविरस्तु ॥

●

कारावासप्रसोढोत्कटविकटमहायातनोग्रा भुशुण्डी—
र्गर्ज्जन्तीस्ताः शतघ्नीज्ज्वलनकणमुचो निर्भयं सम्प्रविश्य ।
वामं चारोप्य पादं रिपुशिरसि बलाद् बद्धहेवाकभावा,
संसत् काचिद् विजेत्री भजतु निजभुजैः प्राज्यसौराज्यलक्ष्मीम् ॥

●

आसहस्रात् संवत्सरेभ्यो दासभावं भजति, परहस्तगतां निजस्वातन्त्र्यलक्ष्मीं पश्यति, नीवृति भारते भाविरहिते, धनेन मानेनाऽऽयुषा वपुषा वर्चसा महसा चावहीनेषु, ग्राम्यजनतासु कूटशतसम्भृतासु, परकीयन्यायाधिकरणेषु, दिवानिशं प्रतारणावितानप्रवणेसु, राजसु राज्यैकस्थापनलक्ष्येष्वप्यविलक्षेषुपरिसरेषु चर्चया-प्यचुम्बितगोचरेषु, नैचिकीषु कङ्कालमात्रीवंरिततनुयष्टिषु, दशमितामालिङ्गत्सु द्रष्टुमपि दुर्लभतामाश्रयत्सु, इत्येतादृशपरश्शतविधाभिः, प्रतिदिशमभिधावन्तीभिः, परिणमते दुर्भगा परतन्त्रैव । क्व लोभनीयाः संवसथा ! क्व कमनीया गावः क्व

रमणीया आश्रमाः ! क्व विस्मापनीयाः पारीन्द्रस्पर्द्धाधारिणस्तरुणाः ! क्व ख्यापनीया व्यापारसम्भाराः ! !

सर्वतो दृश्यन्ते सूना गृहाः । परितो वीक्ष्यन्ते आतुरालयाः । समन्ततो विलोक्यन्ते मांसापणाः विश्वतो निभाल्यन्ते चलच्चित्रभाषणदर्शनानि । अभितोऽनुभूयन्ते भेषजविज्ञापनखचिता भित्तयः । पत्तनानि तु नगरेभ्योऽपि दयनीयानि । तत्र च धूलिधूसराः पथि विसराः, नतकुड्यानि स्थूणामात्रावशेषच्छादनानि वेश्मानि, जरत्कन्था दधाना गणनीयास्थिपञ्जरबन्धना मानवा निमग्नचक्षुषः शिशवः, कार्श्यैकलक्षणीयाः पशवः, किं बहुना कृत्स्नेष्वेव व्यवहारेषु दरिद्रता, रुग्णता, मलिनता च उद्दण्डताण्डवं कुर्वाणा दरीदृश्यते । सर्वथा दुर्दशानिविरीशनिगडितमिदानीं समस्तमेव भारतं वर्षम् । उच्छिन्नप्रायः आर्यधर्मः । लुण्ठितानि निश्शेषतः कनकानि । रक्षणोपायशून्या आर्यजातिः !!

ईदृश्यां, घोरघोरायां पतनावस्थायां विनाशोन्मुखे धर्म्मे, कदनविलुलितायां जातौ, कथं देशस्योद्धारः, कुतो जातिरक्षा ! केन धर्मगुप्तिः ! कस्माद् दौर्विध्यमोक्षः ! कमनुष्ठायोपायं स्वतन्त्रतोपलम्भः ! किं साधनं प्राक्तनसमृद्धिघटनायाः ! सर्वेषामेव प्रश्नानामिदमेवमुत्तरम्—

पौरुषप्रतिलम्भः वीररसोज्जृम्भणम् साहससमाश्रयणम् मृत्योर्निर्भयता, बलोपासनम्, वीरपुरुषाणां रामचन्द्रश्रीकृष्णार्जुनराणाप्रतापशिवाजीमहाराज—प्रभृतिपराक्रमैकरसानां चर्चा च ! !

मेवाड़देशाधिपतेः करालकरवालभीषणरणदुर्मदस्य यवनसाम्राज्यलक्ष्मीवैधुर्यदीक्षणशिक्षणपाटवस्य प्रबलप्रतापवैभवस्य महाराणाप्रतापसिंहस्य क्षत्रियकुलशिरोमणेः नाम को नाम न जानाति भारतावनिलब्धजनिः ।

'ग्रसमानमिवौजांसि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि सपुमान् पुमान् ।
स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥'

मन्ये; इतीदृशि पद्यरत्नानि तदीयचरणसरसीरुहयोरेवोपह्रियमाणानि सार्थकतामासादयन्ति । तस्यैव वीरचक्रवर्तिनो महाराणाप्रतापस्य गुणगौरवगुम्फितं प्रतिज्ञासमज्ञासौन्दर्यसारसम्भृतं यवनमददलनमेदुररणरसप्रवाहितं

'हल्दीघाटी' दुर्घटघटनासंघटनपाटववर्णनोपबृंहितं, नवावतारमिव महाभारतस्य, प्रसादसर्वस्वमिव पौलत्यवधस्य, हेवाकनिकषोपलमिव वीरचरितस्य, पुनर्जननमिव वेणीसंहारस्य व्यरीरचत् प्रतापविजयाभिधानं खण्डकाव्यं राष्ट्रियकविनैकशेवधिः, ईशदत्तः सुधीः । यमभिलक्ष्येयमार्या समवाप्तमर्यादा प्रागेवावततार—

सरसा सालङ्कारा सुपदन्यासा सुवर्णमयमूर्तिः ।
आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥

(आर्या उत्कृष्टा कविता) पर्यवसाने च—

आसेतोराहिमानीधवलतटभरादद्रिभूपालमौलेः,
मध्ये प्राच्यप्रतीच्यौदकनिधिकलितप्राज्यभूचक्रवालम् ।
यत्काव्योल्लासलीला कलितकलकला लब्धवर्णालिमाला,
स श्रीमानीशदत्तो जगति विजयतां सत्प्रतापप्रभावात् ॥

## कवि तथा काव्य-परिचय

जीवन वृत्त-एवं शिक्षा—युगचेता, 'सुकविशिरोरत्न' श्री ईशदत्त पाण्डेय 'श्रीश' पूर्वी उत्तरप्रदेश की उन महाविभूतियों में हैं जो लेखनी एवं वाणी दोनों के धनी, काव्य-प्रतिभा की शाश्वत-ज्योति लेकर अवतरित हुए। 'श्रीश' का जन्म मार्गशीर्ष कृष्णअष्टमी मंगलवार संवत् १९७२ (सन् १९१५) में हुआ। आजमगढ़ जनपदान्तर्गत ग्राम [1]मूँगमास जन्मभूमि। पण्डितवर्य अम्बिकादत्तपाण्डेय जनक तथा देवराज्ञी जननी। पिताजी सनातन-धर्म कालेज लखीमपुर-खीरी में प्रधानाध्यापक थे। इस कारण इनकी प्रारम्भिक शिक्षा-दीक्षा भी वहीं सम्पन्न हुई। दैववशात् पन्द्रह वर्ष की अल्पायु में ही पिताजी की स्नेहिल-सुखद-छाया एवं माता का वात्सल्य दुलार इनके ऊपर से उठ गया। इसके पश्चात् ये वाराणसी आ गये और राजकीय संस्कृत महाविद्यालय (सम्प्रति, सम्पूर्णानन्द संस्कृत विश्वविद्यालय) से संवत् २००० विक्रम (सन् १९४३) में साहित्याचार्य परीक्षा उत्तीर्ण की। हिन्दूविश्वविद्यालय काशी के प्राच्यविभाग में प्रिंसिपल, प्रसिद्ध विद्वान् श्री महादेव शास्त्री जी का अन्तेवासी वनकर साहित्यविद्या का अध्ययन करना उन दिनों सौभाग्य का विषय था, 'श्रीश' जी इस विषय में उनके विशेष कृपा-पात्र रहे। साहित्य विषय का अध्ययन इन्होंने पूरे मनोयोग के साथ किया।

साहित्यविद्या में विशेष रुचि एवं विद्वद्वर्य श्री महादेव शास्त्री जी की कृपा दृष्टि प्राप्त 'श्रीश' जी को आचार्य परीक्षा उत्तीर्ण करने मात्र से तुष्टि न मिली। उन्होंने राजकीय संस्कृत महाविद्यालय की आचार्योत्तर उपाधि 'पोस्ट' आचार्य हेतु अनुसन्धान-विभाग में शोधकार्य भी किया। इसके अतिरिक्त काव्यतीर्थ एवं हिन्दी साहित्य सम्मेलन की उत्तमा ( साहित्यरत्न ) परीक्षाएँ भी उत्तीर्ण कीं। माता-पिता की मृत्यु के पश्चात् उन्हें भीषण अर्थ संकट का सामना करना पड़ा किन्तु साहित्य-रस-पिपासा ने उत्साह एवं धैर्य के सहारे सम्बल दिया, परिणामत; अपने पथ पर अग्रसर होते रहे। कठिनाइयों

---

१, गुणाभिरामा प्रकृति–प्रशोभिता, 'समुद्गमाष' प्रथिता जनस्थली।

— कविवंशवृत्तम्

से लड़ते, साहित्यसाधन करते यह प्रतिभाशाली व्यक्तित्व मकरसंक्रान्ति संवत् २००२ विक्रम ( सन् १९४५ ई० ) में तिरोहित हो गया। अपनी साहित्य साधना के परिणाम स्वरूप 'श्रीश' जी साहित्य-अध्येताओं के लिए अमर हैं। ये साहित्य के साथ-साथ दर्शन के भी पूर्ण पण्डित थे, अपनी एतद्विषयक सर्वाङ्गीण विद्वत्ता के कारण तत्कालीन साहित्य-दर्शन-अध्येताओं के लिए आकर्षण भूमि रहे। त्यागी-प्रवृत्ति, आत्माभिमान सहृदयता एवं सुजनता आदि उनकी मित्र-मण्डली के लिए सदा ही चर्चा के विषय थे। संस्कृत ही नहीं हिन्दी के भी सफल कवि थे। उनकी ओजस्विनी—वाणी की रस-धार में श्रोता मंत्र मुग्ध होकर निमग्न हो उठते और उससे हटना दूभर हो जाता था। कवि के साथ-साथ ये एक कुशल लेखक, समर्थ सम्पादक, समालोचक एवं अद्वितीय वक्ता थे।

साहित्यिक जीवन—'श्रीश' जी की प्रतिभा सर्वसंचारिणी थी, लेखनी में ओज तथा भाषा में सहज सरसता का समावेश। ये जन्मजात कवि थे, बाल्यावस्था से ही काव्य-रचना की सहज प्रवृत्ति प्रकट होने लगी थी। संस्कृत, संस्कृति एवं राष्ट्र यही थे उनके पाथेय, जिनके कारण इनकी वाणी को मुखर होने का अवसर मिला। सांस्कृतिक तथा राष्ट्रीय भावनाओं का उद्रेक ही था जिसने 'श्रीश' जी को काव्यकृतियों के रूप में अमर कर दिया। ये हिन्दी और संस्कृत दोनों भाषाओं के अधिकारी विद्वान् एवं सफल कवि थे। इन्होंने संस्कृत और हिन्दी दोनों साहित्यों की सम्यक् रूप से श्री वृद्धि की। जन्मजात काव्य-प्रतिभा के कारण 'श्रीश' जी ने अपनी स्वच्छन्द लेखनी को जिस विषय पर चलायी वहीं जीवन्त होकर, मुखर शाश्वत्-सन्देश सुनाने उपस्थित हो गया। इन्होंने लघु गीतों से काव्य-रचना का प्रारम्भ करके प्रबन्धात्मक बड़ी कविता तक उसे प्रतिष्ठित कर दिया। ये शब्द-चमत्कार के युवराज, पद-लालित्य में महाकवि दण्डी के ही जैसे अवतार रहे। कवि को अपनी प्रतिभा एवं काव्य-रचना पर गर्व था उसने स्वयं को 'सुन्दर काव्य विग्रह (स्वरूपधारी स्वयं काव्य) कहा है।' सत्यतः 'श्रीश' जी मूर्तिमान् काव्य-रूप-सदृश ही थे।

१. नवावतारो भुवि दण्डिनोऽथवा, नृमूर्तिमान् सुन्दरकाव्यविग्रहः।
—कविवंशवृत्तम्

शब्द तो उनकी रचना में तथैव उपस्थित होते यथा नट अपनी पुतली को जहाँ जैसे चाहा बैठा देता है।

तत्कालीन-काव्य-गोष्ठियाँ तथा संस्कृत की पत्र-पत्रिकाएँ 'श्रीश' जी की उपस्थिति से रहित होने पर रसहीन हो जातीं। कोई भी ऐसा काव्य-रसिक न रहा होगा जो इनकी काव्य-रस माधुरी का भृंग न बना हो। संस्कृत में स्फुट काव्य-रचना 'श्रीश' जीं ने न के बराबर की (मात्र एक दो गीत) किन्तु उनकी हिन्दी की ओजस्वी कविताएँ प्रायः उस समय प्रकाशित होनेवाली हिन्दी पत्र-पत्रिकाओं में प्रकाशित होती रहीं। बाद में संस्कृत पत्रिका 'भारतश्रीः' को इनकी संपादन-कला का सम्बल भी प्राप्त हुआ। ये एक कुशल संपादक थे। अल्पवय में जो सम्मान, जो साहित्य-गौरव तथा कवि-रूप में जो लोकप्रियता 'श्रीश' जी को प्राप्त हुई, वह इस बीसवीं शताब्दी में अन्य किसी के लिए सम्भव न हो सकी। श्रीकाशी-पण्डित-सभा, वाराणसी ने संवत् १९९१ (सन् १९३४ ई०) में 'सुकविशिरोरत्नम्' की उपाधि से विभूषित कर उनके कवि-रूप की सगर्व अर्चना की और इसी प्रकार, 'संस्कृत प्रचारक—समिति' प्रयाग संवत् १९९५ (१९३८ ई०) में 'अभिनन्दन-पत्र' समर्पित कर गौरवान्वित हुई थी। वस्तुतः ये विद्वद्मण्डली के लिए परम गौरव, वाणी के वरद पुत्र थे। इनकी रचनाएँ ये हैं—विद्रोही, झाँसी की रानी' (काव्य) कालिदास तथा सम्राट् विक्रमादित्य और उनके नवरत्न (शोधकृति)।

प्रस्तुत-काव्य—कवि-कर्म की सफल परिणति तभी है जब उससे राष्ट्रीय-गति, गौरव एवं सांस्कृतिक भावों के सहज उद्बोधन के द्वार खुलें और यदि एक-एक पंक्ति, वाणी के प्रत्येक स्वर में उस आत्मबोध की झंकार न सुन पड़ी तो हम उसे मात्र कवि-धर्म की संज्ञा दे सकते हैं—दूसरे प्रकार के कवि-धर्मियों का कभी भीं अभाव न रहा है और न रहेगा परन्तु कवि-कर्म के सफल साधक प्रत्येक युग में विरले हुए तथा विरले हीं हुआ करते हैं। कवि-कर्म के सच्चे एवं सर्वथा सफल साधकों में से ही एक हैं कविवर 'श्रीश' जी और उनके कवि-कर्म की कसौटी है यह, काव्य 'प्रताप-विजय'। वहीं काव्य, वस्तुतः श्रेष्ठ काव्य है जिसमें देश-काल का मूर्तस्वरूप प्रकट होकर पाठक को उसमें रम जाने

की प्रेरणा दे सके और जिनकी एक-एक पंक्ति में युग की पुकार का स्वर समाया हो, ऐसा स्वर जिसकी अनुगूँज प्राण-प्राण में बिजली भर दे। 'श्रीश' जी ने प्रस्तुत काव्य के माध्यम से राष्ट्रीय-संस्कृति के वाहक महाराणा प्रताप का गौरव गान किया, जो युग की प्रवृत्तियों के सर्वथा प्रतिकूल परन्तु कवि-कर्म-साधन का सर्वश्रेष्ठ फल है। सामाजिक-चेतना कुण्ठित थी, परतन्त्रता के वशीभूत हमारी भावनाएँ स्वत्व से पल्ला छुड़ा रही थीं, आत्मबोध की दिशा का संकेत करनेवाली ओजस्वी वाणी कहीं मुखर नहीं हो रही थी, समस्त जन-मानस जर्जर हो गया था, उस समय 'श्रीश' जी ने अपनी वाणी से जागरण का शंखनाद किया।

'प्रताप विजय' वीरभूमि मेवाड़ नरेश वीरपुंगव महाराणा प्रताप के शौर्य-चरित का गान है। कवि ने इस शौर्य-गान द्वारा भारतीयों को आत्मबोध करने का सफल उपक्रम किया है। मंगलाचरण, स्वकाव्य-परिचय के पश्चात् कवि ने 'उपक्रम-क्रमः' में चित्तौड़ तथा सिसौदिया वंश का गौरवपूर्ण इतिवृत्त कहकर, अभिवन्दना, 'प्रतापी-प्रतापः' में महाराणा प्रताप का चरितगान, 'देश-दशा' में तत्कालीन भारतीय समाज की कुंठा, 'प्रताप-प्रतिज्ञा' में स्वाधीनता-प्राप्ति हेतु उनका भीषण प्रतिज्ञा-कथन, 'मान-मानहानि' में अकबर के सेनापति मानसिंह का अतिथि के रूप में आगमन, साथ बैठकर भोजन न करना, मान का क्रोध राणाप्रताप तथा उनके सैनिक की वीरोचित बातचीत, 'राणा-रण- घोषणा' के अन्तंगत प्रताप द्वारा अपने सामन्त सरकारों को युद्ध की तैयारी करने का संकेत, 'रणांगणे राणाप्रतापः' में राणाप्रताप के युद्ध-कौशल का सेनापति कार्तिकेय, इन्द्र, सहस्रार्जुन, आदि की उपमा देते हुये वर्णन, 'कुन्त-कौटिल्यम्' में झाला-माना का प्राणोत्सर्ग, और अन्तिम 'हल्दीघाटी-परिचयः' के अन्तर्गत युद्ध स्थली हल्दीघाटी के माध्यम से न केवल राजपूत-गौरव अपितु भारतीय शौर्य को जीवन्त कर देने का प्रयास किया।

कवि का उद्देश्य चिर-प्रतिष्ठित भारतीय गौरव का गान कर स्व-अस्तित्व के रक्षणार्थ जागरण की प्रेरणा देना है। काव्य-नायक महाराणा प्रताप हमारे राष्ट्र के जीवन्त स्वरूप रहे, उनके त्याग, तपस्या एवं बलिदान का जो चित्र कवि ने

अंकित किया वह हमारी सांस्कृतिक-धरोहर की भूमि है। सोलहवींशती के अंतिम महान् सम्राट् अकबर की अतुलनीय शक्ति से विरोध लेना प्रताप जैसे महासत्त्व के ही योग्य था। उनमें इतिहास प्रसिद्ध मेवाड़ का पुञ्जीभूत शौर्य मूर्तिमान् था—

प्रसन्नचेता बलिनां धुरन्धरः, लसल्ललाटः परिणद्ध-कन्धरः।
नवाऽब्ज-नेत्रः शरदिन्दु सुन्दरः स वेषतोऽभूद् भुवने पुरन्दरः॥
(प्रतापी-प्रतापः)

प्रसन्नता के कारण पवित्र-हृदय, बलशाली जनों में श्रेष्ठ, तेजस्वी भाल और विशाल स्कन्ध (गर्दन) और नवीन विकसित कमल के समान नेत्र, शरत्कालीन चन्द्रमा के सदृश सुन्दर वह इस धरती पर स्वरूप में इन्द्र की समानता धारण करनेवाला था। यही कारण था जो प्रताप ने स्वतन्त्रता-प्राप्ति के लिए भीष्म-प्रतिज्ञा की—प्रभाहत (गरिमा से हीन) हमारे राष्ट्र की महिमा विमल ज्योतिर्मयी होकर पुनः लोक में जब तक नहीं व्याप्त हो जाती; तब तक कभी भी किसी भी दशा में अपने श्रेष्ठ जन्म नगर मैं नहीं जाऊँगा एवं स्वर्ण-निर्मित पात्रों में नहीं, पत्र-पुटक में भोजन करूँगा, राजमहल में नहीं वन में पत्तों से बनी झोपड़ी में निवसूंगा, रत्न जटित सिंहासन पर नहीं बल्कि तृणों से बने आसन पर भूमि में बैठा करूँगा (प्रताप-प्रतिज्ञा)। प्रताप को अपने आत्मबल पर पूर्ण विश्वास है—

जाज्वल्यमान-किरणोऽस्तु दिनेषु चन्द्रः, सूर्यःसमुल्लसतु पश्चिम-दिग्प्रदेशात्।
शुष्कः स्वतो भवतु कल्पतरुः परन्तु, व्यर्था भविष्यति न मद्विहिता प्रतिज्ञा॥
(प्रताप-प्रतिज्ञा)

दिन में ही चन्द्रमा की किरणों का प्रकाश छिटकने लगे, सूर्य पश्चिम दिशा की ओर से उदय हो तथा कल्पवृक्ष स्वयं सूख जाय परन्तु यह मेरी प्रतिज्ञा व्यर्थ नहीं हो सकती। नायक राणाप्रताप को राष्ट्रधर्म, कुलधर्म एवं सांस्कृतिक धर्म के प्रति अगाध-मोह है, ममता है और यही राष्ट्र की संजीवनी है, जिसकी अमिट-रेखा से चित्रित प्रबोध वाणी, जन-मानस को जागरण एवं आत्मरक्षण के लिए सम्बल प्रदान करती है। जब अकबर-सेनापति मानसिंह को राणाप्रताप के साथ भोजन करने का अवसर न मिलने से अवमानना का अनुभव हुआ और

उसने अहंकारवश उन्हें युद्ध की चुनौती दी, उस समय भी प्रताप विचलित नहीं हुए, और धैर्यपूर्वक सांस्कृतिक-मर्यादा का स्मरण करने लगे—

वयं क्व वर्णाश्रमधर्म-मर्मगा, सदा सदाचार-विचार-धारकाः ।
स्वजातिहीनाः कुलधर्मतश्च्युताः, क्व हन्त यूयं कृमि-तुल्य-जन्तवः ॥
सह त्वया हन्त ! कृतेऽनुरञ्जने, न किं विरुद्धं जगतीतले भवेत् ।
क्व दन्तिनः स्याच्छशकेन मित्रता, क्व जम्बुकः सिंहसखः श्रुतस्त्वया ॥
(मान-मानहानिः)

वर्णाश्रम धर्म के मर्म को समझनेवाले तथा सदा ही सदाचार पूर्ण विचारों को धारण करनेवाले कहाँ हम और अपनी जाति से हीन कुलधर्म से गिरे हुए (अलग) कीट के समान जीव कहाँ तुम लोग ? हमें खेद है—तुम्हारे साथ स्नेह व्यहार कर यदि तुमको संतुष्ट करूँ तो इस संसार में धर्माचरणों के विपरीत आचरण करनेवाला नहीं कहा जाऊँगा, ? निश्चित ही यह कृत्य धर्म के विरुद्ध होगा । सत्य है आहार-व्यहार का वर्ताव अथवा मैत्री-भाव सदा समानधर्मा के साथ ही शोभनीय है । प्रताप आगे और कहते हैं क्या हाथी की मित्रता खरगोश के साथ एवं शृगाल को सिंहसखा के रूप में कभी सुना गया है ? असम्भव है। यही नहीं प्रताप को अपने पूर्व-पुरुषों का गौरव प्रत्येक क्षण स्वाभिमानी बनाये रहा—

प्रशस्तेजा अनघो दृढव्रतः स राघवः किं न मदीयवंशजः ।
निहत्य युद्धे किल योऽत्र रावणं, महीतलं चारु चकार शीतलम् ॥
(राणा-रणघोषणा)

प्रशस्त तेजवाले, अकलुष, और दृढ़व्रती वह राम क्या हमारे वंशज नहीं थे ? जिन्होंने इसी भूमि पर युद्ध में रावण का वध करके धरती तल को सुरम्य एवं शीतल कर दिया। प्रताप को गर्व है पूर्व पुरुष रामचन्द्र तथा उनके शौर्य-कृत्यों पर, उनका स्पष्ट संकेत है—यदि इस धरती पर राम ने राक्षसराज रावण का विनाश किया तो क्या हम राक्षसकर्मी यवनों को नष्ट कर अपनी जन्मभूमि को पुनः सुख-सरसानेवाली नहीं बना सकते ? निश्चित ही हम पूर्वजों के प्रताप से सफल होंगे। यवनों के अनाचारों से उनका हृदय क्लेशापन्न है, वह सोचते हैं—

मदीयदेशोऽस्म्यहमेव भूपतिः प्रसिद्धमेतद्वसुधातलेऽस्त्यलम् ।
कथं न लज्जाऽहह मां न बाधते, यदद्य देशो यवनैर्वशीकृतः ॥
(राणा-रणघोषणा)

हमारा देश है, हम इसके नृपति (शासक) हैं, यह हमारा देश धरतीतल पर प्रसिद्ध है, आज मुझे लज्जा का अनुभव क्यों न हो, कष्ट क्यों न पहुंचे, जो यह देश यवनों के अधिकार में चला गया है। अपनी जन्मभूमि के कष्ट-निवारणार्थ वह राजपूत वीरों का आवाहन करते हैं—

आयातु स प्रकटयन् बलमत्युदारं, कर्तुं समर्थ इह यो व्रतमासिधारम् ।
क्रीडास्थलीव किल यं समरस्थली स्यात्, किं वा विषाद इह यस्य कृते प्रसादः ॥
आयातु स प्रबलवानिह साऽभिमानं कृत्वा स्वदेश-चरणे मृदु-मौलि-दानम् ।
वक्षः क्षताज्जनित-शोणित-बिन्दुभिर्यः, निश्शङ्कमङ्कयतु गौरव-गर्व-गानम् ॥
(राणा-रणघोषणा)

अपने बल-पौरुष को प्रगट करते हुए वह आयें जो तलवार की धार पर चलने का व्रत लेने में समर्थ हों, जिनके लिए रणभूमि क्रीडाभूमि के समान प्रतीत हो अथवा जिसके लिए विषाद भी प्रसाद (हर्ष) के सदृश रहे (जो कष्ट पड़ने पर भी प्रसन्न रहते हों)। और बल पौरुषवाला वह आये जो अभिमान-सहित स्वदेश के लिए अपने शीश का दान कर चुका हो, जो विदीर्ण-छाती से निकलते रक्त-बिन्दुओं द्वारा निःशंक होकर गौरव का गान सगर्व अंकित करे।

हमारा दुर्भाग्य कि कवि तीस वर्ष की अल्पायु में ही दिवंगत हो गया अन्यथा सशक्त भाषा-निबद्ध सुन्दर महाकाव्य संस्कृत-साहित्य को मिलता। 'प्रताप-विजयः' समग्रतः अध्ययनोपरान्त एक महाकाव्य का ही प्रारूप प्रतीत होता है। प्रारूप मात्र रूपी इस वीर-रस प्रधान काव्य की एक-एक पंक्ति मनोगत सुप्त-भावों को उभार कर धमनियों में उष्ण-रक्त का सञ्चार करने में सर्वथा समर्थ है। वीररसात्मक यह काव्य माधुर्य, लालित्य, सरसता सरल परन्तु प्राञ्जल भाषा-प्रवाह से सनाथ होने के कारण हमें रसानन्द में निमग्न कर देता है। यद्यपि काव्य का मुख्य प्रयोजन वीररस की अभिव्यक्ति द्वारा कातर-मन भारतीयों के पौरुष को जीवन्त करना रहा इस कारण काव्य-सौष्ठव पर विचार

करना विषयान्तर ही कहा जायगा, तथापि रसाभिव्यक्तिपूर्ण पदों की मधुर-योजनाः गूढ़ातिगूढ़-शब्दालंकारों की प्रकृत छटा, अर्थालंकारों का सुन्दर प्रयोग, सर्वत्र रस का सहज परिपाक कवि-प्रतिभा के परम परिपोषक-स्वरूप उपस्थित करते हैं। हमारी कवि-परम्परा में कवि स्रष्टा के साथ साथ भविष्यद्रष्टा भी रहा है, वर्तमान काल की स्थित परिस्थितियों में रमकर जब वह वाणी का साहचर्य प्राप्त करता है तो भूत, वर्तमान को आत्मसात् करते हुए भविष्यत् के भी कपाट खोलने में आभास की किरणें बिखेर देता है। 'प्रताप विजयः' के कवि ने भी भारत राष्ट्र के स्वाधीन होने की कल्पना की, उस समय वह परिहास ही चाहे प्रतीत हुई हो परन्तु आज वह हमारे समक्ष प्रत्यक्ष है—

शोकं विधेहि नहि भारतभृंग ! नूनं, यत्पारतन्त्र्य-रजनी गतपद्म-बद्धः।
भूयो भविष्यति चिराय सखेऽधुनैव, स्वातन्त्र्यसूर्य-किरणारुण-सुप्रभातम् ॥
(प्रताप-प्रतिज्ञा)

परतंत्रता रूपी रजनी के कारण कमलकोश में बद्ध हे भारतभृंग ! शोक करने की आवश्यकता नहीं है, सखे ! अभी (अत्यन्त शीघ्र ही) अनन्तकाल के लिए स्वतंत्रता के सूर्य की किरणों से अरुण (स्वर्णिम) प्रभात होगा। शब्दों के साथ भावों का सहज नर्तन, कवि-रचना की अनुपम चातुरी कि वर्ण्य वस्तु अथवा दृश्य मूर्तिमान् प्रतीत होने लगता है, आँखें जैसे दृश्य-दर्शन से सनाथ हो रही हों—

खड्गेन खण्डयति कोऽपि विपक्षि-पक्षं, कश्चित्करोति कुटिलच्छुरिकाप्रहारम्।
कश्चिद् भिनत्ति किल सिंहनखेन कश्चित्, कश्चित्, कृपाणफलकेन खलं छिनत्ति॥
(प्रताप-विजयः)।

युद्ध का वर्णन है—राजपूत और यवन-सेनाओं में परस्पर घमासान युद्ध हो रहा है, कवि राजपूत-सैनिकों के लाघव का कथन कर मानों हमें समर-स्थल में घुमा रहा हो महापराक्रमी राणाप्रताप का कोई राजपूत-वीर अपने खड्ग के भीषण प्रहार से शत्रु-पक्षीय वीर को खण्ड-खण्ड करता, कोई तीव्रतर धारवाले छुरा द्वारा आघात करता, कोई बघनख से किसी को छेद डालता और अन्य वीर तलवार की तीक्ष्ण धार से दुष्ट मुगल शत्रु को काट देता। इसी प्रकार

का एक दृश्य और जब महाराणा प्रताप अपनी सेना को व्यूह में नियमित करके, स्वयं कराल-काल के समान रणभूमि में विहरते तो—

अश्वः क्वचित्पतति मर्दित-मुग्ध-मुण्डः, दन्ती क्वचिन्नदति कर्तित-दीर्घ-शुण्डः ।
एवं रिपून् स पशुमारममारयद्धा बद्धाकृति-प्रकट-सङ्गर-सङ्ग-चण्डः ॥
(प्रताप-विजयः)

व्यूह रचना द्वारा महाराणा प्रताप के युद्ध करते समय रणस्थल में शत्रु-पक्ष के अश्व कहीं शस्त्राघातों से त्रस्त होकर ( जिनका मस्तक कुचल उठा) कट-कट कर गिर पड़ते, कहीं हाथी विशाल सूँड़ के कट जाने से घायल हो चिग्घाड़ उठते थे । इस प्रकार राजपूत – सैनिकों के साथ प्रतापसिंह शत्रु यवनों को पशु के सदृश मार-मार कर धराशायी कर रहे थे । प्रताप के अश्व 'चेतक' का वर्णन कितना सजीव है—'विष के कारण उन्मत्त (मतवाले) सर्प के सदृश फूफकार करते, अपनी पीठ पर राणाप्रताप को प्रतिष्ठित किये हुए भीषण (भयानक), उसने (चेतक ने) रणस्थली में अपनी गति का सञ्चार प्रारम्भ कर दिया (चेतक चङ्क्रमणम्) और फिर वह—

अलक्षिताऽशान्तगतागतिः सदा, रणाग्नि–मध्ये तृण-पुञ्ज दायकः ।
ननर्त वैरि-व्रज-मौलि-मण्डले, स मूर्तिधारी रणचक्रवक्रिमा ॥
(चेतक-चङ्क्रमणम्)

वह कभी आँखों से ओझल हो जाता, कभी अशान्त (क्रुद्ध) गतिमान् कभी एक स्थान पर स्थिर, इस प्रकार प्रत्येक क्षण रणरूपी अग्नि में तृणराशि छोड़ता हुआ (युद्ध को भयानक बनाता हुआ) शत्रु-पक्ष के श्रेष्ठ वीरों के समूह में चक्र के समान वक्र गति से चलता हुआ मूर्तिमान् 'चक्र' की-सी प्रतीति उत्पन्न कर रहा था । 'हल्दीघाटी-परिचयः' में कवि भारतीय-पौरुष को हल्दीघाटी के मुख से चुनौती दिला रहा है—परतंत्रता के उपासक अरे कायरों ! मेरा स्पर्श मत करो, जिसने आज भी जन्मभूमि को स्वतंत्रता नहीं प्राप्त करायी, जहाँ वृक्षों की पंक्तियाँ शाखा समूहों द्वारा मर्मर-ध्वनि करती इस प्रकार कहती रहती, हैं । कवि पुनः अन्त में उस भीषण रणस्थली का परिचय किन शब्दों में दे रहा है—

सैषा स्थली चकित-चेतक-चङ्क्रमाणां, सैषा स्थली कुटिल-कुन्त-पराक्रमाणाम् ।
सैषा स्थली प्रियतमाऽप्यसुतोऽमराणां, सैषा स्थली भयकरी नर-पामराणाम् ॥
(हल्दीघाटी-परिचयः)

यह वह स्थान है—जहाँ विपक्षियों को अचम्भित करते हुए चेतक विचरा, यह वही स्थान है जहाँ भीषण भाले का पराक्रम बिखरा, यह वही स्थान है जो प्राण से भी अधिक देवगणों को भी प्रिय है और यह वह स्थान है जो कायर-जनों के लिए भय उत्पन्न करनेवाला है।

'श्रीश' जी शब्दप्रयोग के तो राजकुमार रहे ही, साथ ही उनके काव्य में चमत्कार के भी दर्शन होते हैं। अर्थ-चमत्कार-जनित उपमा, रूपक, श्लेष अलंकारों का प्रयोग मिलता है—

धुरन्धरेण ध्वनिनाऽऽप्रधर्षिणा, चंचच्चलेनाऽऽचलनेन चारुणा।
विपक्षपक्षक्षतिकारिणाऽङ्घ्रिणा स चेतकोऽभूद्युधि चेतकोपमः॥
('चेतकचङ्क्रमणम्')

युद्ध में चेतक 'चेतक' के ही समान है, कितनी समीचीन 'असाधारणोपमा' प्रयुक्त है। इसी प्रकार 'विशालवक्षा······हठान्वितान्, 'अकिञ्चनैः 'जनै, 'शोकं-विधेहि······सुप्रभातम्', 'एवं सुरासुराणामथवाऽत्र···नायकः', 'मदोत्कटो···महार्जुनः' आदि में उपमा, रूपक तथा 'नीहार-सार···वदाऽम्ब', 'मार्तनिसर्ग···मूर्तिम्', 'सञ्चारकलयाऽन्वितोऽपि', 'सरक्त······कस्य सः' आदि में शब्द-सौष्ठव उलेख्य है।

प्रताप विजय काव्य का प्रकाशन कवि के जीवन-काल में ही हो गया था, किन्तु पुनर्मुद्रण न हो सका। काव्य की उत्कृष्टता को देखते हुए साहित्य-मर्मज्ञ श्रीप्रभातशास्त्री (संपादक 'संगमनी' प्रयाग) ने इसे सम्पादित कर पत्रिका में प्रकाशित किया। हर्ष का विषय है कि साहित्य अध्येताओं ने इसका स्वागत किया। विश्व-विद्यालयों ने इसे पाठ्यक्रम में स्थान भी दिया। छात्रों के लिए यह विशेष उपयोगी बन सके, इस कारण इसे सानुवाद प्रकाशित करना पड़ा। अनुवाद करते समय कवि-भाव एवं छात्र-बुद्धि का ध्यान रखा गया है। यत्र-तत्र-भावबोध के लिए बुद्धि-व्यायाम भी करना पड़ा है। अनुवाद-विषयक सुझावों का सहर्ष स्वागत है।

भाद्रपद (अधिक मास) • शिवशङ्कर त्रिपाठी
२१३१ वि० दारागंज, प्रयाग—६

## सरस्वती-स्तवः

### [ आत्मनिवेदनम् ]

पूर्णेन्दुसुन्दर-मुखि ! प्रतिभाऽभिरामे !, वामे विधेः, सुवचसां वचसां विरामे !।
गीर्वाणवाणि ! भुवनाऽऽभरणं भवत्याः, वन्दे दयाऽऽर्द्रचरणं, शरणं जगत्याः ।।

अन्वय—पूर्णेन्दुसुन्दर-मुखि ! प्रतिभाऽभिरामे ! विधेः वामे ! सुवचसां वचसां विरामे ! गीर्वाणवाणि ! भुवनाऽऽभरणं, जगत्याः शरणं, भवत्याः दयाऽऽर्द्रचरणं वन्दे ।

पूर्णमासी के विकसित चन्द्रमा के समानमुखवाली, सुन्दर प्रतिभा की भूमि; सुकविजनों की वाणी में रमण करनेवाली ब्रह्माणी ! भुवनों (लोक) के लिए आभूषण-स्वरूपा, (लोक की शोभा) जगत् के प्राणियों के लिए शरण स्थान हे गीर्वाणवाणि ! तुम्हारे दयार्द्र चरणों (भक्तों के लिए द्रवित होनेवाले) की मैं वन्दना करता हूँ ।

नाऽऽलोक्यते क्वचन सत्प्रतिभाप्रकाशो, भासोऽथवाऽमरमणिः कविकालिदासः ।
तन्मे पुनर्जननि ! सर्जनमर्जयन्ती, किम्मन्यसे न भविता कविता-विलासः ॥

अन्वय—सत्प्रतिभाप्रकाशः भासः अथवा अमरमणिः कविकालिदासः (इदानीं) क्वचन न आलोक्यते, तत् हे जननि ! मे सर्जनं अर्जयन्ती (त्वं) किं न मन्यसे (यत्) पुनः कविताविलासः भविता ।

सम्प्रति भास अथवा अमरमणि कविकालिदास की-सी प्रतिभा का प्रकाश यदि कहीं दिखायी नहीं पड़ता, फिर हे जननि ! तुम तो सृष्टि करनेवाली हो क्या यह मान लेना उचित है कि कविता का विलास सम्भव ही नहीं है (क्या काव्य-, रचना नहीं की जा सकती ? तुम्हारी कृपा की आवश्यकता है, और पुनः वैसी काव्य-प्रतिभा का प्रकाश दिखायी पड़ेगा) ।

केषाञ्चिदस्तु कमला कमलाऽऽयताक्षी, केषां च शम्भुसुमुखी सुमुखीषु मान्या ।
अस्मत्कृते तु जननी जननि ! त्वमेका, यत्पाययेः शम-करं मकरन्दविन्दुम् ।

अन्वय—केषाञ्चिद् कमलाऽऽयताक्षी कमला, केषां च सुमुखीषु मान्या शम्भु-सुमुखी अस्तु। हे जननि ! तु अस्मत्कृते त्वं एका जननी (असि) यत् शमकरं मकरन्द-विन्दुं पाययेः।

जननि ! किसी के लिए तुम कमल-सदृश प्रफुल्ल नेत्रोंवाली कमला हो, किसी के लिए सुमुखियों में श्रेष्ठ माता पार्वती परन्तु मेरे लिए एक मात्र तुम ही जननी हो क्योंकि शान्ति प्रदायक मकरन्द-विन्दुओं का मैं पान कर चुका हूँ। (शान्ति लानेवाली तुम्हारी कृपा का प्रथम आभास मैं पा चुका हूँ।)

तं कल्पना-गत-कला सकला व्रजन्ति, भावा गुणेन सहिता अपि तं नु यन्ति।
दासोपमा नव-रसा अपि तं भजन्ति, सर्वं विहाय भवतीं भुवि ये यजन्ति॥

अन्वय—ये भुवि सर्वं विहाय भवतीं यजन्ति, सकलाः कल्पनागतकलाः तं व्रजन्ति, गुणेन सहिताः भावाः अपि तं यन्ति, दासोपमाः नवरसाः अपि तं भजन्ति नु।

सबका त्याग कर जो जन तुम्हारी उपासना करता है, उसके लिए कल्पना में आनेवाली सभी कलाएँ सहज हैं, गुणों के सहित सभी भाव भी आ जाते हैं एवं नवों रस (शृंगार, वीर, रौद्र, भयानक, करुण आदि) दास के समान उसका अनुगमन करते हैं।

द्वेधा कथं कथय ते कृपया कृपा यत् मेधाविनामनुपमो विहितः स वेधाः।
प्रातःस्तवम्प्रकुरुतेऽनुदिनानि मातः ! जातः कथं न शिशुरेष तवाङ्क-तातः॥

अन्वय—हे मातः ते कृपा कथं द्वेधा, (भवितुं शक्नोति) यत् ते कृपया सः वैधाः मेधाविनाम् अनुपमः विहितः। एषः शिशुः (अपि) अनुदिनानि प्रातः स्तवम् प्रकुरुते। [अतः एषः शिशुः] तव अङ्क-तातः कथं न जातः।

तुम्हारी कृपा से व्रह्मा बुद्धि एवं प्रज्ञावानों में अनुपम वन गये, कृपया वताओ मेरे लिए यह कृपा क्यों नहीं हो रही है, अम्ब ! मैं दिन प्रति-दिन प्रातः तुम्हारा स्तवन करता हूँ, फिर यह मैं तुम्हारा प्रिय पुत्र क्यों नहीं हो सका ? वताओ, यह दो प्रकार की कृपा दृष्टि क्यों ?

यद्यप्यहं कृत-परश्शत-पाप-पीनः, मातस्तथापि शिशुरस्मि नु तावकीनः।
तन्मे कृपां कुरु कृपामयि ! यद् लसद्भा, मद्भारती भवतु भारत-भूमि-भूषा॥

अन्वय—हेमातः यद्यप्यहं कृतपरश्शत-पापपीना (अस्मि) तथापि तावकीनः शिशुः नु अस्मि। तत् हें कृपामयि ! मे कृपां कुरु, यत् लसद्भा मद्-भारती भारतभूमि-भूषा भवतु।

भले ही मैं कलुष, पाप-भार से लदा हुआ हूँ, तथापि जननि ! तुम्हारा ही शिशु हूँ इसलिए हे कृपामयि ! मेरे ऊपर कृपा करो जिससे प्रकाश प्राप्त कर मेरी वाणी भारत-भूमि के लिए शृंगार बन सके।

स्मृत्वा स्थलाम्बुरुह-कोरक-कोमलान्त्वां, तेजोमयीं कनकचम्पकगुच्छगौरीम्।
यातोऽस्मि कामपिदशांविषमांययाऽहं, समोहितोऽस्मिजडितोऽस्म्यपरीकृतोऽस्मि॥

अन्वय—(अहं) स्थलाम्बुरुहकोरककोमलां, कनकचम्पकगुच्छगौरीं, तेजोमयीं त्वां स्मृत्वा कामपि विषमां दशां यातः (अस्मि) यया अहं सम्मोहितः अस्मि, जडितः अस्मि, अपरीकृतः अस्मि।

जननि ! पाटल (गुलाव) की कलिकासदृश कोमल और स्वर्णवर्ण चम्पक के गुच्छे सी गौरवर्ण, (तेजस्विनी,) दोनों रूपों में तुमको स्मरण करके मैं किस दशा को प्राप्त हो गया हूँ, सोचो, तुम्हारे मोहक रूप से मोहित होकर जडवत् स्वयं को ही विस्मृत कर वैठा हूँ।

पीयूषिणां विषवताञ्च मदाऽञ्चितानां,श्यामारुणोज्ज्वलतया समलङ्कृतानाम्।
लीलावतामलसपक्ष्मललोचनानां, मातः! भविष्यति कदा मयि पक्षपातः॥

अन्वय—हे मातः पीयूषिणां विषवतां मदाञ्चितानां च श्यामारुणोज्ज्वलतया समलङ्कृतानां लीलावतां अलसपक्ष्मललोचनानां पक्षपातः मयि कदा भविष्यति।

जननि ! श्याम अरुण एवं उज्ज्वल वर्ण रूप, विष (हालाहल) मद तथा अमृत से विभूषित लीलामय-सवल-भृकुटि-सनाथ अलसाये तुम्हारे नेत्र, उन नेत्रों से मेरे ऊपर तुम पक्षपात कव करोगी ? (मुझे अपनी आँखों के कृपामय कोर का पात्र कव बनाओगी )।

नीहार-सार-शिशिरं श्वसितं त्वदीयं, तन्मन्द-मन्द-मधुरं हसितं त्वदीयम्।
तद् दुग्ध-मुग्ध-वदनं सदनं सुखानां लब्धा स्तनन्धय-शिशुर्नुकदा वदाऽम्ब॥

अन्वय—हे अम्ब ! वद (अयं) स्तनन्धय-शिशुः नीहार-सार शिशिरं त्वदीयं श्वसितं, तत् मन्द-मन्द-मधुरं त्वदीयं हसितं सुखानां सदनं तद् दुग्ध-मुग्ध-वदनं कदा लब्धा।

...अम्ब ! बताओ, शिशिर कालीन तुषार-कण-सदृश तुम्हारा निःश्वास मन्द-मन्द मधुर तुम्हारा हास और दुग्ध-धवल एवं सुखों की भूमि तुम्हारा मुख इस दुधमुहें शिशु को कब मिल पायेगा ?

मातर्निसर्गशशिशीतल-शुक्ति-शुक्ले ! मन्मुग्ध-मानस-मनोहर-राजहंसि ! ।
लावण्य-लालसित-लोचनलोक-लक्ष्मीं द्रक्ष्यामि भारति ! कदा तव मञ्जुमूर्तिम् ॥

अन्वय—निसर्गं शशि-शीतल-शुक्ति-शुक्ले ! मन्मुग्धमानस-मनोहर राजहंसि ! भारति ! तव लावण्य-लालसितलोचनलोकलक्ष्मीं मञ्जुमूर्ति कदा द्रक्ष्यामि ?

चन्द्रमा के समान प्रकृत्या शीतल, शुक्ति (सीपी)—सदृश धवलवर्ण, मुग्ध मेरे हृदय रूपी मानसरोवर की राजहंसि ! सौन्दर्य से विलसित नेत्र रूपी संसार की लक्ष्मीं के समान तुम्हारी मनोहर मूर्ति का हे भारति ! दर्शन मैं कब प्राप्त करूँगा ?

सञ्चार-चारु-चिकुराऽञ्चितमाननन्ते, विस्मारितेऽपि नहि विस्मृतिमेति मातः !।
संवीक्ष्य यद्रुचिरतां।गगनेऽपि चन्द्रो, मन्दोऽभवत्सकलया कलयाऽन्वितोऽपि ॥

अन्वय—हे मातः ! ते सञ्चारचारुचिकुराञ्चितम् आननं विस्मारितेऽपि विस्मृतिं न एति हि यद्रुचिरतां संवीक्ष्य गगने अपि सकलया कलयान्वितोऽपि चन्द्रः मन्दः अभवत् ।

सुन्दर, घुंघुंराले केशों से शोभित तुम्हारा मुख, जिसकी सुन्दरता को देखकर समस्त कलाओं से युक्त गगन-स्थित चन्द्रमा भी मन्द पड़ जाता है, भुलाने पर भी मैं भुला नहीं पा रहा हूँ ।

मन्ये न ते प्रभविताऽस्मि निबद्धवेणी-श्रेणीभरे ।विकच-कोकनदः कदापि ।
किन्तेन मंजुतम-मञ्जिमनूपुरेऽपि, प्राप्स्यामि किन्नहि पदं कलशिञ्जितानाम् ॥

अन्वय—(अहं) विकचकोकनदः ते निबद्धवेणी-श्रेणीभरे कदापि प्रभविता न अस्मि । (इति) मन्ये । मञ्जुतम-मञ्जिमनूपुरेऽपि (अहं) कलशिञ्जितानां पदं किं न प्राप्स्यामि हि ? (यदि न प्राप्स्यामि) तेन किम् ?

ठीक है यह तो मैं मानता हूँ कि पंक्तिबद्ध सुन्दर केशों में गूंथी वेणी से युक्त कमल के सदृश तुम्हारे मुख का दर्शन नहीं पा सकता तो क्या सुन्दर नूपुरों की मंजु ध्वनि से झंकृत चरणों का भी दर्शन न प्राप्त कर सकूंगा (चरणों के दर्शन करने का भी पात्र मैं नहीं हूं ?) तथापि चिन्ता नहीं ।

भाषा स्वभाव-सरसा त्वमहं प्रसङ्गः, मन्दाकिनी मधुमयी त्वमहं तरङ्गः।
मन्दारबालकलिका त्वमहं तदङ्गः, ज्योतिर्मयी विजयसे त्वमहं पतङ्गः॥

अन्वय—हे मातः ! त्वं स्वभावसरसा भाषा अहं प्रसङ्गः। त्वं मधुमयी मन्दाकिनी अहं तरङ्गः। त्वं मन्दारबालकलिका अहं तदङ्गः। त्वं-ज्योतिर्मयी विजयसे अहं पतङ्गः।

जननि ! तुम यदि स्वाभाविक सरस भाषा-स्वरूप हो तो मैं प्रसंग, मधुमयी मन्दाकिनी तो मैं उसकी लहर, मन्दार की अविकसित कली तो मैं उसका अंग एवं तुम यदि विजयदायिनी ज्योतिर्मय-स्वरूपा हो तो मैं उस पर मुग्ध शलभ के समान हूं।

पूर्णाऽसि वाणि ! रजनी त्वमहं शशाङ्कः, विद्युच्छटाऽसि तदहं सजलो घनाङ्कः।
कस्तूरिका त्वमसि चेत्तदहं मृगाङ्कः, त्वं याऽसि साऽसि परमेष शिशुस्तवाङ्कः॥

अन्वय—हे वाणि ! त्वं पूर्णा रजनी असि अहं शशाङ्कः (अस्मि) (त्वं) विद्युच्छटा असि तत् अहं सजलः घनाङ्कः (अस्मि)। चेत् त्वं कस्तूरिका असि तत् अहं मृगाङ्कः (अस्मि)। त्वं या असि सा असि परं एषः शिशुः तव अङ्कः (अस्ति)।

वाणि ! तुम यदि पूर्णिमा की रात्रि हो तो मैं उसमें प्रकाशित चन्द्रमा, विद्युत की छटा हो फिर मैं जल से पूर्ण बादलरूपी-अंकस्थल (बादल), हूं और कस्तूरिका हो तो मैं मृग तथा तुम जो हो, सो हो मैं तुम्हारे क्रोड़ का शिशु ही हूँ।

चेच्चन्द्रिकाऽसि तदहं चटुलश्चकोरः चेत्त्वं नवाम्बुदघटा तदहं मयूरः।
कल्याणि ! कल्पलतिकाऽसि तदाऽस्मि रेणोरन्वेषणातुर-तरो-रस-रञ्जनोऽहम्॥

अन्वय—(त्वं) चन्द्रिका असि चेत् तत् अहं चटुलः चकोरः (अस्मि)। त्वं नवाम्बुदघटा (असि) चेत् तत् अहं मयूरः (अस्मि)। हे कल्याणि ! (यदि त्वं) कल्पलतिका असि तदा अहं रेणोः अन्वेषणातुरतरः रस-रञ्जनः (अस्मि)।

यदि तुम चन्द्रिका हो तो मैं उस पर आसक्त चकोर, यदि तुम नव जलधरों की पंक्ति तो मैं मयूर तथा हे कल्याणि ! यदि तुम कल्पलता हो तो मैं मकरन्द के लिए आकुल (रस पाँन-हेतु आतुर) रसिक हूं। (कविता-रस को खोज करनेवाला साधक हूं।

भूयो निनादय, निनादय वाणि ! वीणां, चञ्चच्चराचरविमोहविधौ प्रवीणाम्।
यन्निस्सरत्स्वरसुधा—रसपान—मत्तः, भूयात्तवायमजरः शिशुरीशदत्तः॥

अन्वय—हे वाणि ! चञ्चच्चराचरविमोह-विधौ प्रवीणां वीणां भूयः निनादय निनादय ! यन्निस्सरत्स्वरसुधा-रसपान-मत्तः अयं तव शिशुः ईशदत्तः अजरः भूयात् ।

हे वाणि ! चराचर (जगत्) को मोहित करने की विधि में प्रवीण, वीणा की ध्वनि पुनः मुखरित करो, जिसके स्वर रूपी-सुधा-रस के पान द्वारा विह्वल यह तुम्हारा शिशु 'ईशदत्त' अजर हो जाय ।

•

## लेखनीं प्रति

अयि लेखनि ! लिख्यतां तथा, वरवीरस्य यथा यथा कथा ।
क्रियतां च तथा विचारणा, प्रभवेदद्य यया सुधारणा ॥

अन्वय—अयि लेखनि ! यथा यथा वरवीरस्य कथा (अस्ति) तथा विलिख्यताम् तथा विचारणा क्रियतां, यथा अद्य सुधारणा प्रभवेत् ।

वीरश्रेष्ठ की जैसी भी जिस प्रकार कथा है, उस रूप में हे लेखनि ! अंकित करो एवं विचारों की ऐसी सरणि का प्रसार करो जिसमें आज, अब सुखद धारणा व्याप्त हो उठे । (जन-जन के मानस में सुविचार उत्पन्न हों) ।

प्रभवेर्न मृषा विलेखने क्वचनाऽपि प्रबले ! मम प्रिये ।
न च हिन्दुमताभिघातिनी, यवनानां न च पक्षपातिनी ॥

अन्वय—हे प्रबले ! मम प्रिये (लेखनि) क्वचन अपि मृषा विलेखने न प्रभवेः हिन्दुमताभिघातिनी च न (प्रभवेः) । यवनानां पक्षपातिनी च न (प्रभवेः) ।

हे मेरी प्रिय लेखनि ? प्रवले ! (सब कुछ लिखने में सक्षम) किंचिदपि असत्य अंकन करने में उद्यत न हो—तुम न तो हिन्दू जाति के मतों पर आघात करो एवं न यवनों का पक्ष समर्थन करो ।

कथमेतदलम्प्रभा—रतं, भुवनेऽभूदधुना प्रभा-हतम् ।
कवि-कल्पलते ! विलिख्यताम्-इति सर्वं सुविविच्य निर्भयम् ॥

अन्वय—हे कविकल्पलते ! अलं प्रभारतं एतद् (भारतवर्षम्) अधुना भुवने कथम् प्रभाहतम् इति सर्वं निर्भयं सुविविच्य विलिख्यताम् ।

कविगण के लिए कल्पलता-सदृश हे लेखनि ! निर्भय होकर भली-भाँति विवेचन द्वारा स्पष्ट कर दो कि भुवनमात्र (जगतीतल में) के लिए प्रभा का विस्तार करनेवाले हम (देशवासी) आज हतप्रभ (श्री से रहित) क्यों हो रहे हैं ?

•

## क्षणं समीक्षणम्

न या स्वकीयं विजहाति भारतं, मदानने नृत्यति चाऽप्यनारतम् ।
सरस्वती सा जननीव मद्वचः, कथं न कुर्यात् प्रतिभा-प्रभारतम् ॥

अन्वय—या स्वकीयं भारतं न विजहाति (या) मदाननेऽपि अनारतं नृत्यति च जननी इव सा सरस्वती मद्वचः प्रतिभा-प्रभा-रतं कथं न कुर्यात् ।

जननी सदृश जो सरस्वती अपने भारत (देश) को त्यागती नहीं और जो हमारे मुख-मण्डल (वाणी में) पर अविराम-भाव से विराजमान (नृत्य करती) रहती है, वह हमारी वाणी को प्रतिभा के प्रकाश से परिपूर्ण क्यों न करेगी ? (कवि को सरस्वती पर पूर्ण आस्था है) ।

भणच्चलच्चित्रपटप्रिये जने, वृथा यथा शास्त्र-पुराण-जल्पना ।
तथाऽद्य यूनां निवहे प्रभा-हते, वृथाऽस्मदीया रण-कीर्ति-कल्पना ॥

अन्वय—यथा भणच्चलच्चित्रपटप्रिये जने शास्त्रपुराणजल्पना वृथा, तथा अद्य प्रभाहते यूनां निवहे अस्मदीया रणकीर्ति-कल्पना वृथा ।

चलचित्र-प्रेमी जन के सामने जिस प्रकार शास्त्र पुराणों की चर्चा करनी व्यर्थ होती है उसी प्रकार तेज-विहीन तुम सबके लिए (भारतीय हीन-पौरुष जनों के समक्ष) यह रणकीर्ति विषयिणी हमारी कल्पना तक व्यर्थ प्रतीत होती है।

प्रतापसिंहस्य तथाऽपि वर्णना, मया यथाशक्ति स-भक्ति चित्रिता ।
पवित्रिता भारतभूरियं यया पवित्रयिष्यत्यथ किन्न साऽद्य माम् ॥

अन्वय—तथाऽपि मया यथाशक्ति सभक्ति प्रतापसिंहस्य वर्णना चित्रिता । यया इयं भारतभूः पवित्रिता । अथ अद्य सा (वर्णना) किं माम् न पवित्रयिष्यति ।

तथापि प्रतापसिंह के चरित्र का चित्रण यथाशक्ति श्रद्धा-भक्ति-पूर्वक जो भी मैंने किया, और जिस चरित्र से यह भारत भूमि पवित्र हुई है, वह क्या मुझे आज पवित्र नहीं करेगा ? (तात्पर्य है कि उस चरित्र का गान कर मेरी वाणी पवित्र हो जायेगी।

न यस्य देशे, रतिरस्त्यनुत्तमा, न वा स्वधर्मव्यथयाऽऽकुलम्मनः।
न तत्कृतेऽसौ सफलो मम श्रमः, किमस्ति मिष्टं कपये पयः क्वचित् ॥

अन्वय—यस्य रतिः देशे अनुत्तमा नास्ति (यस्य) मनः स्वधर्मव्यथया आकुलं न वा। तत्कृते मम असौ श्रमः सफलः न। किं क्वचित् कपये पयः मिष्टम् अस्ति ?

जिसका हृदय देश के प्रति अनुत्तम (अत्यन्त प्रशस्त) कृत्यों में रत नहीं होता अथवा मन स्वधर्म-पालन की चिन्ता में व्याकुल नहीं रहता, उनके लिए मेरा यह श्रम (यह काव्य-कृति) उसी प्रकार सफल नहीं है। (रुचिकर न प्रतीत होगा) जिस प्रकार बन्दर को दूध के मधुर स्वाद का अनुभव नहीं होता।

अलङ्कृतिर्नैव रसो, गुणोऽथवा न रीतिरत्रास्ति तथाप्यसौ कृतिः।
न कस्य मोदं वितनोत्यदूषणा विभूषणाऽप्यङ्कगता वधूरिव ॥

अन्वय—अत्र अलङ्कृतिः नैव (अस्ति) रसः गुणः अथवा रीतिः (अपि) नास्ति। तथापि विभूषणापि अङ्कगता वधूरिव असौ अदूषणा कृतिः कस्य मोदं न वितनोति ?

इसमें न अलंकार है न रस अथवा गुण है तथा काव्य-रीति का भी निर्वाह इसमें नहीं है तथापि यह कृति किसके लिए मोद (आनन्द) की सृष्टि नहीं कर सकती ? (अर्थात् सहृदय के लिए रसानन्द कारक है) उसी प्रकार जैसे गोद में स्थित रूपवती वधू आभूषण से हीन होने पर भी आनन्द का ही कारण बनती है।

मनोजमूर्च्छन्मदिरामदालसाः, मनोज्ञ 'हाला'—रसपानलालसाः।
पठन्तु वा नैव पठन्तु का क्षतिः, वृथैव तेषां न विधीयते नतिः ॥

अन्वय—मनोजमूर्च्छन्मदिरामदालसा, मनोज्ञ 'हाला' रसपानलालसा (जनाः) (इमां कृतिं) पठन्तु वा नैव पठन्तु का क्षतिः वृथैव तेषां नतिः न विधीयते।

कामदेव के समान जड़ता को प्राप्त करानेवाली मदिरा के मद से शिथिल 'हाला' (कविवर बच्चन की मधुशाला की ओर संकेत है ) के रसपानकांक्षी जन मेरी कृति को पढ़ें, अथवा न पढ़ें क्या हानि है ? कुछ भी नहीं, इसलिए उनको नमस्कार भी नहीं करता।

## उपक्रम-क्रमः

व्यनक्ति लोके महिमाऽऽलयः सदा, यदीयलोकोत्तरतां हिमालयः।
स राजते भारत—भूतलाञ्चले, विराजते भारतवर्षनामभाक् ॥

अन्वय—महिमालयः हिमालयः यदीयलोकोत्तरतां लोके सदा व्यनक्ति सः भारतभूतलाञ्चले राजते ( हिमालयेन युक्तः ) भारतवर्षनामभाक् ( असौ देशः ) विराजते।

परममहिमाशाली हिमालय लोक में जिसकी अनुपम महिमा का विस्तार करता रहता है, वह शोभायुक्त भारत—भूमि के अंचल में शोभित भारतवर्ष नाम का देश है।

सदैव गङ्गा—यमुना—सरस्वती–नदी–तरङ्गाऽऽलुलितो महामहाः।
जगत्त्रयेश–प्रिय–वेषवान् हि यः, स एषः देशः किल कस्य न प्रियः ॥

अन्वय—यः हि सदैव गङ्गा-यमुना-सरस्वती नदी-तरङ्गालुलितः, महामहाः जगत्त्रयेशप्रिय वेषवान् (अस्ति) सः एषः देशः कस्य न प्रियः किल ?

यह देश किस जन के लिए प्रिय नहीं, जिसे गंगा, यमुना और सरस्वती जैसी विशाल नदियाँ अपनी लहरों द्वारा प्रक्षालित कर महिमावान् बनाती हैं एवं जो तीनों लोक के ईश का प्रिय वेष स्वरूप है। (जहाँ भगवान् विष्णु वेश धारण कर अवतार लेते हैं )

कृपाण–कुन्तादिक शस्त्र–झङ्कृता, सदैव वीरोचितहुङ्कृताऽङ्किता।
प्रताडिताऽराति—ततिस्तदङ्कगा विभाति मेवाड़–मही महीयसी ॥

अन्वय—कृपाणकुन्तादिकशस्त्रझङ्कृता, सदैव वीरोचितहुङ्कृताङ्किता, प्रताडिताऽरातिततिः महीयसी तदङ्कगा मेवाड़मही विभाति।

तलवार, भाला आदि शस्त्रों की झंकार से झंकृत होनेवाली, प्रत्येक क्षण वीरोचित-हुँकारों से परिपूर्ण तथा जहाँ (जिसकी सीमा में) शत्रु—समूह पहुँचकर

उत्साह-हीव हो, पराजित होता है, वह मेवाड़ भूमि महिमाशालिनी बनकर शोभा पा रही है।

दुरन्त 'मोहम्मद' मोहमर्वनं, पुरा पुरारातिमयी चकार या।
चित्तौड़ नाम्ना किल तत्र वर्त्तते, पुरी सुधीरोरुज—वृन्द—वन्दिता ॥

अन्वय—तत्र सुधीरोरुज-वृन्द-वन्दिता 'चित्तौड़' नाम्नी पुरी वर्तते किल। पुरारातिमयी या पुरा दुरन्तमोहम्मदमोहमर्दनं चकार।

शंकर की शक्ति से व्याप्त जिस राजस्थान ने प्राचीन काल में ( राजपूत एकलिंग भगवान् के उपासक हैं, इसलिए 'पुरारातिमयी' विशेषण प्रयुक्त है) विकट मोहम्मद के मोह का मर्दन कर दिया था, वही चित्तौड़ नाम की वीर-धीरों के पराक्रम से पोषित एवं वन्दित नगरी है।

इहैव वध्वो युगपत्सहस्रशः, सुकोमला हा कलिकाऽङ्कुरादपि।
स्वधर्म—संरक्षण—हेतवे तनुं, विदग्धवत्यो ज्वलने तृणोपमाः।

अन्वय—हा, इहैव कलिकाऽङ्कुरादपि सुकोमलाः तृणोपमाः सहस्रशः वध्वः स्वधर्मसंरक्षणहेतवे ज्वलने तनुं विदग्धवत्यः।

यहीं हजारों की संख्या में अंकुरित कली से भी कोमल कुलवधुएं एक साथ, अपने धर्म की रक्षा—हेतु शरीर को तृण-सदृश मानती हुई अग्नि—ज्वाला में दग्ध कर चुकी हैं।

'सिसौदिया' वंशवतां नृणामियं. महा—महाभारत—रङ्गभूरभूत्।
विबोधयन्ती च विपक्षिणां क्षयं, खमुच्छ्रिता वैजय—वैजयन्तिका ॥

अन्वय—इयं 'सिसौदिया' वंशवतां नृणां महामहाभारतरङ्गभूः अभूत् (अस्यां) विपक्षिणां क्षयं विबोधयन्ती वैजयवैजयन्तिका खम् उच्छ्रिता च।

सिसौदिया वंश में उत्पन्न श्रेष्ठ पुरुषों के लिए यह महाभारत-समर की सृष्टि करनेवाली, आकाश तक लहराती विजयिनी (विजय) ध्वजा से विभूषित विपक्षियों के क्षय का बोध करानेवाली है।

समेहि वीरोऽसि यदि त्वमन्यथा, निधेहि नूनं सहसा पलायनम्।
सदा वदन्तीव जनान्समागतान्, अहर्दिवं या गगनङ्गताऽभवत् ॥

अन्वय—या सदा समागतान् जनान् यदि त्वं वीरः असि समेहि अन्यथा नूनं पलायनं विधेहि' इति वदन्ती इव अहर्दिवं गगनङ्गता अभवत् ।

जो ( शत्रु रूप में ) आये हुए जनों से सदा यह कहती हुई—यदि तुम वीर हो, समर करो अन्यथा तुरन्त भाग जाओ, (यह वाणी) प्रतिदिन गगन तक गूँजती रहती है ।

गता न या सप्तशताब्दकाऽवधि, प्रतापिनीत्वात् परिपन्थिवश्यताम् ।
इयं पुरी सैव महामनस्विनी, ध्वजावती, तच्छिरसा नमस्यताम् ॥

अन्वय—या प्रतापिनीत्वात् सप्तशताव्दकावधि परिपन्थिवश्यताम् न गता । तत् सा एव महामनस्विनी ध्वजावती इयं पुरी शिरसा नमस्यताम् ।

सात शताब्दियों की अवधि-पर्यन्त (सात सौ वर्ष तक) जो अपने प्रताप के कारण किसी शत्रु (आक्रमण करनेवाले ) के वश में न हो सकी, यह वही महिमाशालिनी नगरी है, जहाँ ध्वज लहराया करता है, उसे शिर से नमस्कार करना चाहिए ।

●

## प्रतापी-प्रतापः

अभूत्पुरा भारत–भा–विभासकः स एकलिङ्गस्य सदङ्घ्र्युपासकः ।
महाबली दुर्गचितौर—शासकः, प्रतापसिंहः परताप—नाशकः ॥

अन्वय—पुरा महाबली प्रतापसिंहः दुर्गचितौरशासकः अभूत् सः भारतभाविभासकः एकलिङ्गस्य सदङ्घ्र्युपासकः परतापनाशकः (च आसीत्) ।

प्राचीन समय में भारत की गरिमा—ज्योति का विस्तार करनेवाला, एकलिङ्ग भगवान् का अनन्य उपासक, दूसरों के सन्ताप का निवारक, चित्तौड़ दुर्ग का शासक महाबली प्रतापसिंह हो गया है ।

अटाट्यमानो ह्यटवीषु सन्ततं, स्वतन्त्रतार्थी, सकलत्र—पुत्रकः ।
अवाप दुखं नहि किं व्यथाऽऽकुलः, स वीरतायास्तनयो वरान्वितः ॥

अन्वय—वरान्वितः वीरतायास्तनयः सकलत्र-पुत्रकः स्वतन्त्रतार्थी व्यथाकुलः सः अटवीषु सन्ततम् अटाट्यमानः किं दुःखं नहि अवाप ।

वह अपनी स्त्री तथा पुत्रों सहित स्वतन्त्रता की प्राप्ति के लिए निरन्तर वन पर्वतों में भटकता रहा, क्या उसने दुःख नहीं प्राप्त किया ? परन्तु दुःख से भी आकुल न हुआ। वह वीरता का साक्षात् श्रेष्ठ पुत्र था।

अनाथ—नारीजन—शोक-शोचनः, गवां द्विजाना गलदश्रुमोचनः।
स एक एवाऽभवदार्य—रोचनः, समुल्लसल्लोहित-लोल—लोचनः ॥

अन्वय—समुल्लसल्लोहितलोललोचनः गवां द्विजानां गलदश्रु मोचनः, अनाथनारीजनशोकशोचनः स एकः एव आर्य-रोचनः अभवत्।

अनाथों एवं नारीजन के शोक से सन्तप्त होनेवाला, गाय और ब्राह्मणों को आँसू से रहित करनेवाला (उनके कष्ट का निवारण करनेवाला) उल्लास भावों से पूर्ण विशाल नेत्रोंवाला, आर्यजाति का भूषण उसके समान एकमात्र वह ही था।

मुमोच कोपात्तरुणाऽरुणाऽधरः कच-प्रबन्धान् यवनी-जनस्य यः।
स हिन्दुना केन स-रक्तविन्दुना, न लालनीयो जगदेकरत्नवत् ॥

अन्वय—तरुणाऽरुणाधरः यः कोपात् यवनीजनस्य कचप्रबन्धान् मुमोच। सरक्त विन्दुना केन हिन्दुना सः जगदेकरत्नवत् लालनीयः न।

तरुण (पुष्ट) और लोहित अधरोंवाले जिस वीर ने अपने क्रोध से यवन-स्त्रियों के केश-बन्धन ढीले कर दिये, जगत् के अनुपम रत्न-सदृश वह किस हिन्दू के द्वारा रक्त-सने विन्दुओं तक से लालन का पात्र नहीं है (सभी हिन्दुओं के लिए वह अनुकरणीय है)।

विशालवक्षा अधिपाणि भासयन्, महाकरालं करवाल-कालकम्।
इवेन्दुवज्र स महीध्र-मण्डलान् जघान लोकेषु शठान् हठान्वितान् ॥

अन्वय—इन्द्रवज्रः महीध्रमण्डलान् इव विशालवक्षाः सः अधिपाणि महाकरालं करवालकालकम् भासयन् लोकेषु हठान्वितान् शठान् जघान।

विशाल वक्ष (चौड़ी छाती) काल के समान महाभयंकर वज्र सदृश चमकते कृपाण से शोभित—हाथ वह साक्षात् इन्द्र के समान था—इन्द्र ने अपने वज्र से पर्वत समूह का नाश किया और उस प्रतापसिंह ने लोक के हठी शठ, दुष्टों का वध किया था।

प्रसन्नचेता बलिनां धुरन्धरः, लसल्ललाटः परिणद्ध-कन्धरः।
नवाब्ज-नेत्रः शरदिन्दुसुन्दरः स वेषतोऽभूद्भुवने पुरन्दरः ॥

अन्वय—नवाब्जनेत्रः, शरदिन्दुसुन्दरः, लसल्ललाटः परिणद्धकन्धरः, प्रसन्नचेताः बलिनां धुरन्धरः सः भुवने वेषतः पुरन्दरः अभूत्।

प्रसन्नता से पवित्र-हृदय, बलशालि-जनों में श्रेष्ठ, तेजस्वी-भाल और विशाल स्कन्ध (गर्दन) एवं नवीन विकसित कमल सदृश नेत्र, शरत्कालीन निर्मल चन्द्रमा के समान सुन्दर, वह इस धरती पर स्वरूप में इन्द्र की समानता धारणकरनेवाला हो गया है।

अकिञ्चनैः कल्पतरुप्रभीकृतः, स्वयं विडौजा इति वीरवन्दितः।
धृतोऽरिभिः काल इव स्व-मानसे स कल्कि-कल्प⌒कलित⌒कलौ जनैः॥

अन्वय—सः (महाराणाप्रतापः) अकिञ्चनैः कल्पतरुप्रभाकृतः स्वयं विडौजा इति वीरवन्दितः अरिभिः स्वमानसे काल इव धृतः जनैः कलौ कल्किकल्पः कलितः।

याचक, दीन जनों द्वारा जो कल्पवृक्ष की प्रकृति धारण करनेवाला माना जाता, स्वयं इन्द्र अवतरित है, इस प्रकार जो वीरजनों से वन्दित (पूजित) होता रहा शत्रु-जन जिसे काल के समान अपने मन में समझते थे, वह कलयुग में जनों के लिए सुन्दर कल्कि—सदृश मान्य हुआ।

क्षणे क्षणे यस्य रणे रतिर्भवेत्, पदे पदे यो विनिपातयेदरीन्।
तदद्य किं विस्मय-कारणं बुधाः!, गृहे-गृहे सम्प्रति चेत्स पूज्यते॥

अन्वय—हे बुधाः!, यस्य रतिः क्षणे-क्षणे रणे (एव) भवेत्, यः अरीन् पदे-पदे विनिपातयेत्। चेत् सः संप्रति गृहे-गृहे पूज्यते, तदद्य विस्मयकारणं किमस्ति।

क्षण-प्रतिक्षण जिसका हृदय रणभूमि में ही रमण करने का इच्छुक रहता, जो पद-पद पर शत्रुओं को धराशायी करता था वह यदि अब घर-घर में पूजा जा रहा है, तो आज भी आश्चर्य का विषय क्या है।

स्व-वैरि-सैन्ये सहसा प्रवेशतः, स्ववेशतो भीमतमं तमो नयन्।
प्रतापसिंहो निजसिंहनादतः, प्रकम्पयामास न कस्य मानसम्॥

अन्वय—स्ववैरिसैन्ये सहसा प्रवेशतः स्ववेशतः भीमतमं तमः नयन् प्रतापसिंहः निजसिंहनादतः कस्य (शत्रोः) मानसम् न प्रकम्पयामास ?

अपने शत्रुओं की सेना में प्रवेश करते हुए अपने भयावह वेश द्वारा (भीम के से स्वरूप की प्रतीति कराते हुए) घोर—अन्धकार की स्थिति उत्पन्न (शत्रु-दल चकाचौंध में पड़कर अन्ध-सा हो जाता आँखों के समक्ष अन्धकार दिखायी पड़ने लगता था) कर देता था। ऐसा प्रतापसिंह सिंह-गर्जना के सदृश अपनी हुंकार से किसके हृदय को नहीं कँपा देता था (समस्त शत्रु-समूह काँप उठता)।

●

## देश-दशा

बभूव लोकोत्तरभव्यभाग्यवान्, महामहीपो मुगलान्वये महान् ।
स राजराजैर्विहितप्रणामको जगत्प्रसिद्धोऽकंवरेति—नामकः ॥

अन्वय—मुगलान्वये अर्कंवरेति नामकः महान् जगत्प्रसिद्धः लोकोत्तरभव्य-भाग्यवान् महामहीपः बभूव। राजराजैः सः विहितप्रणामकः आसीत् ।

प्रसिद्ध (महान्) मुगलवंश में अनुपम भाग्यशाली, राजे-महाराजाओं द्वारा वन्दित' संसार में प्रसिद्ध अकंबर नाम का महान् सम्राट् हो गया है ।

पितामहो यस्य महापराक्रमी, गुणेन नाम्ना च बभूव 'बर्बरः' ।
विजित्य 'पानीपत'-युद्धमत्र यः प्रसिद्धतामाप धराप-मण्डले ॥

अन्वय—यस्य नाम्ना 'बर्बरः' महापराक्रमी पितामहः गुणेन च वर्बरः वभूव। यः अत्र पानीपतयुद्धं विजित्य धरापमण्डले प्रसिद्धताम् आप ।

जिसका पितामह अत्यन्त पराक्रमशाली एवं अपने गुणों के कारण 'वर्बर' (वावर) नाम से प्रसिद्ध हुआ जिसने यहाँ 'पानीपत' का युद्ध जीतकर इस भूमण्डल के राजाओं में प्रसिद्धि प्राप्त की ।

पिता च यस्य क्षिति-राजरञ्जनः, 'हुमायुँ'-नामा रिपु रोष-भञ्जनः ।
प्रभञ्जनस्तस्य सुतो भवेन्न किं, विपक्षि-सैन्यङ्कृत-गर्व—गञ्जनः ॥

अन्वय—यस्य 'हुमायुँ', नामा पिता क्षितिराज-रञ्जनः रिपु-रोष-भञ्जनः च (आसीत्) किं तस्य सुतः विपक्षि-सैन्यङ्कृत-गर्वं गञ्जनः प्रभञ्जनः न भवेत् ।

जिसका पिता पृथ्वी के नरेशों की प्रसाद-भूमि, शत्रु दल के क्रोध का विनाशक 'हुमायूँ' नामधारी हुआ, उसका पुत्र फिर विपक्षियों की सेना के अभिमान को ध्वस्त करनेवाला क्यों न हो जो स्वयं वायु के समान गतिवाला रहा ।

छली रिपुर्भारतवर्ष—भू-भुवां स कूटनीतौ प्रथितो भुवस्तले ।
यम-प्रतिस्पर्धि-विशुद्ध-हैन्दवं, निनाय नाशं क्रमशः पराक्रमम् ॥

अन्वय—भारतवर्षभूभुवां रिपुः, भुवस्तले कूटनीतौ प्रथितः सः छली यमप्रतिस्पर्धि विशुद्धहैन्दवं पराक्रमम् क्रमशः नाशं निनाय ।

वह महान् छलकर्मी भारतीय भूमि के जनों का परमशत्रु, धरतीतल पर कूटनीति में अत्यन्त कुशल प्रसिद्ध हुआ, पवित्र हिन्दुत्व से ईर्ष्या, द्वेष रखने के परिणामस्वरूप यम-सदृश शनैः शनैः उसने हमारे पराक्रम को नष्ट कर डाला ।

स हिन्दुहा हिन्दुभिरेव सन्ततं, विधाय सङ्गं बलतश्च लोभतः ।
तदीय-कन्याजन-सङ्गमाऽऽकुलः चकार तांस्तानखिलान् पदाश्रितान् ॥

अन्वय—बलतः लोभतश्च हिन्दुभिः एव सन्ततं सङ्गं विधाय तदीयकन्याजनसङ्गमाकुलः सः हिन्दुहा अखिलान् तांस्तान् पदाश्रितान् चकार ।

वह हिन्दुओं द्वारा ही निरन्तर हिन्दूजनों का, मैत्री, बल एवं लोभ के प्रभाव से विनाश करता रहा, उनकी कन्याओं के साथ साहचर्य (विवाह-सम्बन्ध) स्थापित कर, उन्हें ही समस्त उच्च पदों पर उसने प्रतिष्ठित किया ।

अथेत्थमेव प्रविधाय दुष्कृतिं, महादयालोर्दयया वशीकृतः ।
तदीय—सैन्याऽधिपतिस्तदाऽभवत्, स मानसिंहो महितो महीतले ॥

अन्वय—अथ तदा महादयालोः दयया वशीकृतः महीतले महितः सः मानसिंहः इत्थम् एव दुष्कृतिं प्रविधाय तदीयसैन्याधिपतिः अभवत् ।

इसी प्रकार का दुष्कृत्य करके एवं उस महाकृपालु की कृपा के वशीभूत हो, तब वह मानसिंह उसकी सेना का सेनापति बनकर धरती पर महिमावान् बना ।

●

## प्रतापप्रतिज्ञा

सिंहासने स हि 'महेन्द्र' पदेऽभिषिक्तो, लोके बभावतितरां जगदेकवीरः ।
नैसर्गिको भवति हेम-घट–प्रभावान् मार्तण्ड रश्मि-रुचिरस्यपुन–कथा का ॥

अन्वय—सिंहासने महेन्द्रपदेऽभिषिक्तः जगदेकवीरः सः (महाराणाप्रतापः) लोके अतितरां बभौ । हि हेमघटः नैसर्गिकः प्रभावान् भवति । पुनः मार्तण्डरश्मि-रुचिरस्य (प्रतापस्य) का कथा ?

सिंहासन पर वह महेन्द्र पद पर अभिषिक्त लोक में अत्यन्त गरिमा प्राप्त करनेवाला संसार में अप्रतिम वीर था। स्वर्ण-घट प्रकृति से चमकीला होता है, यदि उस पर सूर्य की किरणों का सुन्दर प्रकाश पड़ जाय तो और अधिक चमक उठता है—उसी प्रकार लोक में प्रसिद्ध महिमावान् वीर महाराणा प्रताप के सिंहासन पर अभिषिक्त हो जाने पर उनका गौरव अधिक बढ़ गया।

'मेवाड़'-मण्डल-मणि: स महाप्रतापी, दृष्ट्वा दशां विमल-भारतवर्ष-मध्ये।
इत्थं चकार जगतां प्रथितां प्रतिज्ञां, प्रज्ञां नियोज्य निपुणञ्च विचार्य विज्ञान्॥

अन्वय—मेवाड़-मण्डलमणि: महाप्रतापी स: विमलभारतवर्षमध्ये (दयनीयां) दशां दृष्ट्वा प्रज्ञां नियोज्य विज्ञान् निपुणं विचार्य च, जगतां प्रथिताम् इत्थं प्रतिज्ञां चकार।

मेवाड़-मण्डल के लिए प्रभावान् मणि-सदृश उस महाप्रतापी ने पवित्र भारत की दयनीय दशा को देखकर भलीभाँति विचार करके, बुद्धि के प्रयोग सहित [विवेक से भली-भाँति ठीक समझ कर] संसार में प्रसिद्ध हो जानेवाली इस प्रकार प्रतिज्ञा की—

यावत्प्रभाहतमदो मम भारतं मा, भूय: प्रभा-रतमलं भुवने भवेद्वै।
तावत्कदापि कथमप्यपि नैव, नूनं यास्यामि जन्मनगरं नगरं गरीय:॥

अन्वय—यावत् मम अद: प्रभाहतम् भारतं भुवने भूय: वै अलम् प्रभा-रतम् मा भवेत् तावत् नूनं (अहं) कथमपि (स्वकीयं) गरीय: नगरं जन्म नगरम् अपि कदापि नैव यास्यामि।

प्रभाहत (गरिमा विहीन) हमारे राष्ट्र की महिमा विमल ज्योतिमयी होकर पुन: लोक में जब तक व्याप्त नहीं हो जाती तब तक कभी भी किसी दशा में भी अपने श्रेष्ठ जन्म-नगर मैं नहीं जाऊँगा।

अत्स्यामि पत्रपुटके न पुनर्न हैमे, वत्स्यामि पर्ण-भवने विजने न हर्म्ये।
स्थास्याम्यहं भुवि तृणासनकेषु तेषु नत्वच्छ-रत्न-रचितेषु नृपासनेषु॥

अन्वय—अहं पत्रपुटके अत्स्यामि, न पुनर्न हैमे (पात्रे) विजने पर्णभवने वत्स्यामि हर्म्ये न भुवि तृणासनकेषु स्थास्यामि अच्छरत्नरचितेषु तेषु नृपासनेषु तु न।

स्वर्ण-निर्मित पात्रों में नहीं पत्र-पुटक [ पत्ते का पतली सींकों की सहायता से बना वृत्ताकार पात्र जिसे 'दोना' कहा जाता है] में भोजन करूंगा, राजमहल में नहीं,

वन में पत्तों से बनी झोपड़ी में रहूँगा, रत्न-जटित राजसिंहासन पर नहीं, अपितु भूमि में तृणों से बने आसन पर बैठूँगा।

जाज्वल्यमानकिरणोऽस्तु दिनेषु चन्द्रः, सूर्यः समुल्लसतु पश्चिमदिक्प्रदेशात्।
शुष्कः स्वतो भवतु कल्पतरुः परन्तु, व्यर्था भविष्यति न मद्विहिता प्रतिज्ञा॥

अन्वय—चन्द्रः दिनेषु जाज्वल्यमानकिरणः अस्तु, सूर्यः पश्चिमदिक्प्रदेशात् समुल्लसतु कल्पतरुः स्वतः शुष्कः भवतु परन्तु मद्विहिता प्रतिज्ञा व्यर्था न भविष्यति।

दिन में ही चन्द्रमा की किरणों का प्रकाश छिटकने लगे, सूर्य पश्चिम दिशा की ओर से उदय हो जाय एवं कल्पवृक्ष स्वयं सूख जाय परन्तु यह मेरी प्रतिज्ञा व्यर्थ नहीं हो सकेगी।

या मञ्जुनूपुररवैः रमणी-मणीनां पीयूषतोऽपि मधुरैर्मधुरा पुराऽऽसीत्।
सेयं 'चित्तौर' नगरी नगरीष्वनन्या, कस्याऽद्य नैव हृदयं हठतो दुनोति॥

अन्वय--पुरा नगरीष्वनन्या 'चित्तौर' नगरी रमणीमणीनां मधुरैः मञ्जु-नूपुररवैः पीयूषतः अपि मधुरा आसीत्। सा इयं (चित्तौर नगरी) अद्य कस्य हृदयं हठतः नैव दुनोति।

नगरियों में श्रेष्ठ यह चित्तौड़ नगरी जो पूर्व समय में श्रेष्ठ रमणियों के सुन्दर नूपुरों से उठती अमृताधिक मधुर ध्वनि द्वारा मधुर होती रही, आज इससे किसका हृदय (हठपूर्वक) दुःखानुभव नहीं करता ? अर्थ यह कि सबका हृदयदुःखी हो रहा है।

याऽऽसीत् पूरा हरितशस्यदलाऽभिरामा, स्निग्धाभ्रनील-वसना कृत-सर्वकामा।
सा जन्म-भूः प्रतिपदं नररक्तरक्ताऽभक्ताऽद्य जीवति कथंचिदहोऽत्यशक्ता॥

अन्वय—अहो ! पुरा या हरितशस्यदलाभिरामा, स्निग्धाभ्रनीलवसना कृतसर्व-कामा (च) आसीत् अभक्ता अत्यशक्ता, प्रतिपदं नररक्तरक्ता सा जन्मभूः अद्य कथञ्चित् जीवति।

प्राचीन समय में जो हरित शस्य-दलों से सुन्दर थी, निर्मल-नील गगन-रूपी आच्छादन (नीलवर्ण की कल्पना) द्वारा भूषित सभी कामनाओं को पूर्ण करनेवाली वह जन्मभूमि आज पग-पग पर मनुष्य के रक्त से रंजित हो रही है, विरोधी जी रहें हैं, हम किस प्रकार अत्यन्त शक्तिहीन हो गये हैं ? (क्या कारण है कि हम असमर्थ होकर सहन कर रहे हैं ?)

क्वाऽपि प्रतारणमलं ललनाजनानां, दृष्ट्वा क्वचित्सुरजन-प्रतिमाऽपमानम् ।
हिन्दून्विलोक्य च पशूनिव हन्यमानान्,हा!!हृत्तलं भवति मे शतधा विदीर्णम् ।।

अन्वय—हा क्वापि ललनाजनानाम् अलं प्रतारणम् क्वचित् सुरजनप्रतिमापमानं दृष्ट्वा, पशूनिव हन्यमानान् हिन्दून् च विलोक्य मे हृत्तलं शतधा विदीर्णं भवति ।

स्त्री जाति का कहीं पीडित होना, (स्त्रियों के साथ अभद्रता का व्यवहार होना) देव-प्रतिमाओं का अपमान किया जाना एवं पशु के सदृश हिन्दुओं का वध होना देखकर हा ! मेरा हृदय शतशः खण्डों में विदीर्ण हो जाता है ।

चिन्तां कलत्रसुतयोर्न तयोर्विधाय, याचेऽभिलाषणमदो जगदीश्वराय ।
'मेवाड' मण्डल-बलोन्नयनं, वनं वा, म्लेच्छौघसैन्य-शरणं मरणं, रणं वा ।।

अन्वय—(अहं) तयोः कलत्रसुतयोः चिन्तां न विधाय जगदीश्वराय अदः अभिलाषणं याचे (यत्) मेवाड़मण्डलबलोन्नयनं (करवाणि) वनं वा (गच्छानि) म्लेच्छौघसैन्यशरणं मरणं (प्राप्तवानि) रणं वा (करवाणि) ।

स्त्री (पत्नी) पुत्र दोनों की चिन्ता न करके ईश्वर से इस कामना की याचना करता हूँ कि वह शक्ति दे जिससे मैं मेवाड़ मण्डल की शक्ति (बल ऐश्वर्य) में वृद्धि करूँ अथवा वन में निवास, म्लेच्छों की सेना में शरण लूँ अथवा रण-भूमि में मरण का वरण करूँ ।

क्रोधानलो दहति हा हृदयं मदीयं, हस्तश्च संस्फुरति वैरि-वधे स खड्गः ।
भूयश्च लौहकवचाऽऽकुलमस्ति वक्षो, यद्देश एष मम वैरि-जनेन विद्धः ।।

अन्वय—हा क्रोधानलो मदीयं हृदयं दहति सखड्गः हस्तश्च वैरिवधे संस्फुरति वक्षः भूयः लौहकवचाकुलं च अस्ति । यत् मम एषः देशः वैरिजनेन विद्धः अस्ति ।

हा ! क्रोधजनित अग्नि से मेरा हृदय दग्ध हो रहा है खड्ग-सनाथ हाथ शत्रु-वध के लिए फड़क रहा है, लौहकवच से पुष्ट मेरा वक्ष बार-बार व्याकुल हो रहा है कि यह मेरा देश शत्रुओं द्वारा कैसे दलित हो गया ?

'वाप्पाकुलेऽमलतमे' न गृहीतजन्मा, नाहम्प्रताप इति विश्रुतभीमकर्मा ।
वीरांगना न जननी मम नास्मि शूरः, चेन्म्लेच्छ-मण्डलमलं निखिलं न हन्मि ।।

अन्वय—चेदहं निखिलं म्लेच्छमण्डलम् अलम् न हन्मि अमलतमे वाप्पाकुले

गृहीतजन्मा न, विश्रुतभीमकर्मा प्रताप इति न, मम जननी वीरांगना न शूरः (च) न अस्मि।

यदि मैं समग्र म्लेच्छ-समुदाय का वध न करूँ तो वाप्पा रावल के निर्मल कुल की सन्तान नहीं और न तो प्रसिद्ध भीम के समान कर्म करनेवाला प्रताप नामधारी (महान् कार्य करनेवाला प्रसिद्ध) तथा मेरी जननी वीराँगना नहीं एवं मैं वीर नहीं हूँ।

रे रे मदीय कर मुग्ध ! कठोर कुन्त ! प्रक्रान्तधार ! कुटिलाऽऽक्रमणेन किन्ते।
यच्छासति त्वयि सदा रिपुशोणितार्द्रे, जीवन्ति दुष्टहतका यवना जगत्याम्॥

अन्वय—प्रक्रान्तधार ! सदा रिपुशोणितार्द्रे ! रे रे मदीय-कर-मुग्ध ! कठोर-कुन्त ! ते कुटिलाक्रमणेन किम् (प्रयोजनम्) ? यत् त्वयि शासति दुष्टहतकाः यवनाः जगत्यां जीवन्ति।

अरे, मेरे हाथ पर मुग्ध (मेरे हाथ में विलसनेवाले) कठोरकुन्त ! तीव्रतर-धारवाले तुम्हारे भयावह आक्रमण करने की कला से क्या लाभ जो शत्रु-रक्त से गीले तुम्हारे शासन में भी जगतीतल पर दुष्ट यवन जीवित हैं ?

भ्रातुः सहोदर-वरस्य वधाय पूर्वं, योऽभ्युद्यतोऽभवदहो समरेऽप्रधर्षः।
तस्याऽस्ति ते करुणया किमु नाम कार्यं, शीघ्रं कृता न जनता न नतानना चेत्॥

अन्वय—अहो. यः अप्रधर्षः (मदीयः कुन्तः) पूर्वं समरे सहोदरवरस्य भ्रातुः वधाय अभ्युद्यतः अभवत् तस्य ते करुणया किमु नाम कार्यम् अस्ति चेत् शीघ्रं जनता न नतानना न कृता।

पूर्व समय में सहोदर भाई के वधार्थ जो तैयार हो गये थे जो तुम युद्ध में अपराजेय हो उस तुम्हारे लिए करुणा से द्रवित होने की क्रिया कैसी ? (तुम्हारा गौरव क्या ?) यदि तुम समस्त विपक्षियों को मेरे सामने नतमस्तक नहीं कर देते ?

शोकं विधेहि नहि भारतभृङ्ग ! नूनं, यत्पारतन्त्र्य-रजनीगतपद्म-बद्धः कं।
भूयो भविष्यति चिराय सखेऽधुनैव, स्वातन्त्र्यसूर्य-किरणारुण-सुप्रभातम्।

अन्वय—हे सखे ! भारतभृङ्ग ! चिराय पारतन्त्र्यरजनीगतपद्मबद्धः (त्वं) शो। नहि विधेहि यत् भूयः अधुनैव स्वातन्त्र्य—सूर्यकिरणारुणसुप्रभातम् नूनं भविष्यति।

परतंत्रता रूपी रजनी के कारण कमलकोश में बद्ध हे भारत-भृङ्ग ! शोक न करो, सखे ! अभी शीघ्र ही अनन्तकाल के लिए स्वतंत्रता रूपी सूर्य की किरणों से अरुण (स्वर्णिम) प्रभात होगा।

प्राणादपि प्रियतमा निज-पूर्वजानां, मान्या पुनर्भवतु जन्म-धरा स्वतन्त्रा ।
साऽऽभा रतीरितगुणावलिरद्य भूयः, सा भारती भवतु भारत-भू-विभूत्यै ॥

अन्वय—निजपूर्वजानां प्राणादपि प्रियतमा मान्या जन्मधरा पुनः स्वतंत्रा भवतु । साभा रतीरितगुणावलिः सा भारती अद्य भूयः भारत-भू-विभूत्यै भवतु ।

अपने पूर्व पुरुषों के लिए प्राणों से भी अधिक प्रिय पूजनीया हमारी जन्म-भूमि पुनः स्वतंत्र हो, आज पुनः प्राचीन गौरवमय तेज एवं गुणों की राशि से समन्वित प्रकाश बिखर जाय और आभा-सनाथ भारती भारत की धरती का वैभव गान करने-वाली बने ।

●

## मान-मान-हानिः

विजित्य शोलापुर-गं महारणं, स मानसिंहो जयमालिकाऽञ्चितः ।
बभूव मानोन्नत-भाल-भाक् पथि, प्रतापसिंहस्य निकेतनेऽतिथिः ॥

अन्वय—शोलापुरगं महारणं विजित्य जयमालिकाञ्चितः मानोन्नतभालभाक् स मानसिंहः पथि प्रतापसिंहस्य निकेतने अतिथिः बभूव ।

शोलापुर के महासमर में विजय प्राप्त कर जयमाल से भूषित होने के कारण अभिमानवशात् उन्नतभाल वह मानसिंह मार्ग में प्रतापसिंह के गृह अतिथि के रूप में उपस्थित हुआ ।

प्रतापजातोऽ'मरसिंहनामवान्' तदीयमातिथ्यमलं तदाऽकरोत् ।
स्वयम्प्रतापस्तु कदाप्यहो ! सकृत्, न चाह्वयत्तं न तदन्तिकङ्गतः ॥

अन्वय—तदा अमरसिंहनामवान् प्रतापजातः तदीयम् आतिथ्यम् अकरोत् अहो प्रतापस्तु स्वयं सकृत् तदन्तिकम् कदापि न गतः तम् च आह्वयत् (अपि) न ।

प्रतापसिंह के पुत्र अमरसिंह ने उस समय भलीभाँति उसका आतिथ्य सत्कार किया किन्तु स्वयं प्रतापसिंह ने एक बार भी न उसका नाम लिया एवं न वह उसके समीप गया ।

उदीरितो भो जन ! भोजनाय वै, स मानसिंहोऽमरसिंहवर्म्मणा ।
न वीक्ष्य तस्मिन्समयेऽपि तन्नृपं व्यभाषतैवं परितापतोऽमरम् ॥

अन्वय—अमरसिंहवर्म्मणा भोजनाय सः मानसिंहः 'भोजन' (इति) उदीरितः । (सः) तस्मिन् समयेऽपि त नृपं न वीक्ष्य परितापतः अमरम् एवं व्यभाषत ।

क्षत्रिय अमरसिंह द्वारा भोजन ग्रहण करने का निवेदन किये जाने पर उस समय भी उस नृप (महाराणा प्रताप) को न देखकर उस मानसिंह ने अमर (अमरसिंह) से व्यथा के साथ इस प्रकार कहा—

पुराऽऽगतो नैव वरं स नागतः, प्रतापसिंहः कथमत्र नागतः ।
अनागते हन्त ममाशनं कथं, तदत्र शीघ्रं वद किन्नु कारणम् ? ॥

अन्वय—पुरा प्रतापसिंहः नैव आगतः वरं नागतः (परन्तु सः) अत्र कथं न आगतः । हन्त (तस्मिन्) अनागते मम अशनं कथम् भवेत् ? तद् अत्र किं कारणं नु शीघ्रं वद ?

आज से पहले मैं आया था, उस समय नहीं आये, आज भी प्रतापसिंह यहाँ क्यों नहीं आये ? खेद है उनके न आने पर मेरा भोजन कैसा ? (मैं कैसे भोजन कर सकता हूँ ?) इसलिए तुरन्त बताओ उनके न आने का कारण क्या है ?

उवाच वाचं महितः स मत्पिता, नितान्त-तान्तोऽस्ति 'शिरोव्यथा' हतः ।
ततोऽशनं वै भवता समं विभो !, न शक्यते तेन विधातुमन्ततः ॥

अन्वय—सः वाचम् उवाच महितः मत्पिता शिरो-व्यथा हतः, नितान्त-तान्तः अस्ति । हे विभो ! ततः वै तेन भवता समम् अन्ततः अशनं विधातुं न शक्यते ।

उसने उत्तरस्वरूप कहा–मेरे पूज्य पिता जी शिरपीडा की व्यथा से अत्यधिक कष्ट में हैं, इस कारण हे ऐश्वर्यशालिन् ! आपके साथ भोजन ग्रहण करने का विधान वह नहीं पूर्ण कर सकते ।

निशम्य चैवं ह्यमरं निहारयन्, शिरस्तलेऽन्नस्य कणं प्रधारयन् ।
समुत्थितो भोज्यमलं निवारयन् ननाद वाक्यं च लसन्महारयम् ॥

अन्वय—(सः मानसिंहः) एवं निशम्य च अमरं निहारयन् शिरस्तले अन्नस्य कणं प्रधारयन् भोज्यम् अलम् निवारयन् हि समुत्थितः लसन्महारयम् वाक्यं ननाद च ।

इस प्रकार का कथन सुनकर अमरसिंह की ओर देखते हुए अपने शिर पर

अन्न का कण धारण कर भोजन की सामग्री हटाते हुए वह उठा अत्यन्त उग्र वाणी में सोत्साह गर्जन करने लगा—

वद प्रतापं तममानकारिणं, यदेष मानो भवता तिरस्कृतः।
इहाऽऽश्वथाऽऽयास्यति सौषधिर्यतः–'शिरोव्यथा' ते न पुनर्भवेद् भवे ॥

अन्वय—तम् अमानकारिणं प्रतापं वद यद् एषः मानः भवता तिरस्कृतः इह आशु अथ सा ओषधिः आयास्यति यतः ते शिरोव्यथा भवे पुनर्न भवेत् ।

मेरा अपमान करनेवाले प्रताप से कह दो कि-आप द्वारा यह मानसिंह अपमानित हुआ है। वह शीघ्र ही यहाँ वह औषधि लेकर आयेगा जिससे पुनः सिर की पीड़ा इस संसार में तुम्हें न होगी। (मानसिंह का संकेत भयानक युद्ध में राणा प्रताप को पराजित करने की ओर है।)

तदैव हर्षेण गृहाद् विनिःसरन्, स साहसी तं सहसा जनं हसन्।
सहस्र-नेत्र-प्रतिमो रिपुन्दमो, महाद्युतिर्वाचमुवाच मानिनम् ॥

अन्वय—तदैव सहसा सहस्रनेत्रप्रतिमः महाद्युतिः रिपुन्दमः साहसी सः हर्षेण गृहाद् विनिःसरन् तं मानिनं जनं हसन् वाचम् उवाच ।

उसी समय हर्षित-हृदय गृह से बाहर निकलते हुए उसके कथन का उपहास करते (कथन सुनकर हँसते) हुए शत्रु का दमन करनेवाले साहसी सूर्य के समान महाज्योति-सी बिखेरते हुए प्रताप ने उस मानसिंह से कहा—

पितामहस्ते यवनाय कन्यकाँ, ददौ ततः किन्न कुलं कलंकितम्।
तथाऽपि साधं मयकैव भोजनं, न मान! एवं भज माननीयताम् ॥

अन्वय—ते पितामहः यवनाय कन्यकां ददौ किं ततः (तव) कुलं कलङ्कितम् न? तथापि मयकैव साद्धं भोजनम् (इच्छसि)। हे मान! एवं माननीयताम् न भज।

तुम्हारे पितामह ने अपनी कन्या यवन को प्रदान की, क्या उससे कुल नहीं कलंकित हुआ? (निश्चित ही कलंकित हो गया) इतने पर भी मेरे साथ भोजन (की अभिलाषा)? हे मान! इस प्रकार तुम अब माननीय मत बनो। (तुम अब स्वयं को माननीय समझकर मेरे साथ भोजन ग्रहण करना चाहो तो यह तुम्हारी भूल है)।

वयं क्व वर्णाश्रमधर्ममर्मगा, सदा सदाचार-विचार-धारकाः।
स्वजाति-हीनाः कुलधर्मतश्च्युताः, क्व हन्त! यूयं कृमि-तुल्य-जन्तवः ॥

अन्वय—वर्णाश्रमधर्ममर्मगाः सदा सदाचार-विचारधारकाः वयं क्व ? हन्त स्वजातिहीनाः कुलधर्मतश्च्युताः कृमितुल्यजन्तवः यूयं क्व ?

वर्णाश्रम-धर्म के मर्म को समझने वाले एवं सदा ही सदाचारपूर्ण विचारों को धारण करनेवाले कहाँ हम और अपनी जाति से हीन कुलधर्म से गिरे हुए कीट-सदृश जीव कहाँ तुम लोग ?

सह त्वया हन्त ! कृतेऽनुरञ्जने, न किं विरुद्धं जगतीतले भवेत् ।
क्व दन्तिनः स्याच्छशकेन मित्रता, क्व जम्बुकः सिंह-सखः श्रुतस्त्वया ॥

अन्वय—हन्त ! त्वया सह अनुरञ्जने कृते किं जगतीतले विरुद्धं न भवेत् । दन्तिनः मित्रता शशकेन (सह) क्व स्यात् । त्वया जम्बुकः सिंहसखः इति क्व श्रुतः ?

खेद हो रहा है—तुम्हारे साथ स्नेह-व्यवहार कर तुमको यदि सन्तुष्ट करूं तो इस संसार में धर्माचरणों के विरुद्ध आचरण करनेवाला नहीं कहा जाऊंगा ? निश्चित ही धर्म के विपरीत होगा । क्या हाथी की मित्रता खरगोश के साथ और शृगाल को सिंह-सखा के रूप में कभी सुना है ? असम्भव है ।

अनल्प-रूक्षाक्षर-जल्पनाऽऽकुलः, तपँल्ललाटन्तपवन्मुखाऽरुणः ।
जगाद शैघ्र्येण हयोपरि स्थितः, स मानसिंहोऽपि गिरङ्गरीयसीम् ॥

अन्वय—अनल्परूक्षाक्षरजल्पनाऽऽकुलः तपँल्ललाटन्तपवन्मुखाऽरुणः शैघ्र्येण हयोपरिस्थितः स मानसिंहः अपि गरीयसीं गिरम् जगाद ।

अनेक रूखे शब्दों में बोलता हुआ आकुल, क्रोधाधिक्य के कारण जिसके ललाट पर लालिमा प्रकट थी, मुख से श्वाँस छोड़ता, वह मानसिंह भी शीघ्रतापूर्वक घोड़े पर बैठकर, तीव्र वाणी बोला—

रणोन्मुखस्तिष्ठतु सज्जितो भवान्, ध्रुवं मदीयाऽऽगमनं भविष्यति ।
अथाऽऽवयोरेकजनश्च सङ्गरे यशोऽवशेषो भविता नु भूतले ॥

अन्वय—भवान् रणोन्मुखः सज्जितः तिष्ठतु, मदीयागमनं ध्रुवं भविष्यति । अथ च सङ्गरे आवयोः एकजनः भूतले यशोऽवशेषो भविता नु ।

आप रण के लिए सज्जित होकर तैयार रहें, निश्चित मेरा आगमन होगा और हम दोनों के उसी संग्राम में, इस धरती-तल पर निश्चित ही दोनों में से एक कीर्तिशेष रह जायगा ।

विदारिताऽस्यः परितः स्फुरत्सटः, भयानकाऽऽकारधरोऽधिकाननम् ।
प्रसुप्त—सिंहोऽद्य हठात्प्रबोधितः, न मानसिंहो भवता तिरस्कृतः ॥

अन्वय—भवता मानसिंहः न तिरस्कृतः (परं) अद्य विदारिताऽऽस्यः परितः स्फुरत्सटः भयानकाऽऽकारधरः अधिकाननम् प्रसुप्तसिंहः हठात्प्रबोधितः ।

भीषण आकारवाले, विस्फारितमुख चारों ओर सटा-जाल को फैलाए हुए अरण्य में सोते सिंह को आज कष्ट पहुंचाकर बलात् जगा दिया है, मानसिंह का तिरस्कार नहीं किया है यह आपने ।

पदाहतः कोपमयो महाफणी, मुहुर्मुहुर्न्यञ्चित—भोग—मण्डलः ।
पुनर्हतः पादतलेन साम्प्रतं, न मानसिंहो भवता तिरस्कृतः ॥

अन्वय—भवता मानसिंहः न तिरस्कृतः (प्रत्युत) पदाहतः कोपमयः मुहुर्मुहुः न्यञ्चित–भोग–मण्डलः महाफणी साम्प्रतम् पुनः पादतलेन हतः ।

क्रुद्ध महासर्प जो एक बार पैरों से आहत हो जाने के कारण अपने फण को बार-बार नीचे की ओर झुकाता रहता है, सम्प्रति उसे पुनः पैरों से मार दिया है आपने न कि यह मानसिंह को अपमानित किया है ।

य एकलो भारत-भूपतेः प्रियः, प्रसिद्धसेनापतिरस्ति वीर-राट् ।
रिपुत्वमङ्गीकरणं ततोऽभयं, विभावयेत् को नु भवन्तमन्तरा ॥

अन्वय – यः वीरराट् भारतभूपतेः एकलः प्रियः प्रसिद्धसेनापतिः अस्ति, ततः अभयं रिपुत्वमङ्गीकरणं ततः भवन्तम् अन्तरा कः नु विभावयेत् ।

जो एक छत्र भारतसम्राट् का प्रिय, वीरशिरोमणि और प्रसिद्ध सेनापति है, सम्प्रति उसके साथ निर्भयमन शत्रुता स्वीकार करने का विवेक आपके अतिरिक्त किसमें आ सकता है ? एक मात्र आप ही समर्थ हैं ।

जगाद भूयस्तदनन्तरं क्रुधा, प्रतापसिंहः किल सिंहविक्रमः ।
विधाय 'मानं' धृत-मौनमन्ततः स वीरराजः स्फुरितोत्तराधरः ॥

अन्वय—तदनन्तरं अन्ततः 'मानं' धृतमौनं विधाय स्फुरितोत्तराधरः सिंहविक्रमः वीरराजः सः प्रतापसिंहः भूयः क्रुधा जगाद किल ।

उसके पश्चात् मानसिंह को मौन धारण कराते हुए सिंह सदृश विक्रमशाली वीरप्रवर प्रतापसिंह ने ऊपर का ओष्ठ फड़काते हुए क्रोधावेग में फिर कहा ।

अलर्कवत्केशरिणः पदान्तिके, वराक ! जल्पस्यलमग्रतो मुधा।
तृणायतस्त्वद्बलतः कदाप्यहो ! ममाग्निरूपस्य कथम्भयम्भवेत् ॥

अन्वय—हे वराक ! केशरिणः अग्रतः पदान्तिके अलर्कवत् मुधा अलं जल्पसि। अहो तृणायतः त्वद्वलतः अग्निरूपस्य मम भयं कदापि कथम् भवेत् ?

सिंह के चरणों तले पड़े वेचारे पागलकुत्ते का भौंकना व्यर्थ होता है (उसी प्रकार तुम्हारी यह वाचालता सर्वथा प्रभाव न डालनेवाली है। अग्निरूपी मेरे लिए तृण के सदृश तुम्हारे वल से भय की कहाँ सम्भावना ? (जिस प्रकार अग्नि तृण को भस्म कर देता है उसी प्रकार मैं तुम्हारे वल को नष्ट कर सकता हूँ। अग्नि को तृण से भय कभी हुआ है ?)।

न गर्वमेवं कुरु वीरताऽञ्चितं प्रदर्शय स्वं वलमेव सैन्यगम्।
वदन्ति वीरा न कदापि किन्तु ते, स्वकर्म भीमं विदधत्यभीतितः ॥

अन्वय—एवं वीरताञ्चितं गर्वं न कुरु। स्वं वलम् सैन्यगम् एव प्रदर्शय। वीराः वदन्ति न किन्तु अभीतितः भीमं स्वकर्म विदधति।

इस प्रकार अभिमान मत करो शौर्यशालिन् ! अपना सैन्यवाला ही वल प्रदर्शित करना। वीरपुरुष वाचालतावश वहुत वोलते नहीं वे तो निर्भय मन अपने भीषण कर्म में ही सन्तुष्टि पाते हैं।

व्रज स्वगेहं निजसैन्य-सज्जितः पुनः समागच्छ मदर्थमातुरः।
तदा तव स्वागतमत्र मानिनः, स्वयं करिष्यामि कृपाणपाणिना ॥

अन्वय—स्वगेहं व्रज। निजसैन्यसज्जितः मदर्थम् आतुरः पुनः समागच्छ। तदा अत्र (अहं) स्वयं कृपाणपाणिना तव मानिनः स्वागतं करिष्यामि।

जाओ अपने घर, अपनी सैन्य-शक्ति एकत्र कर उत्साहसहित पुनः मेरे लिए आना। उस समय हे मानी ! मैं स्वयं यहाँ खड्गहस्त उपस्थित होकर तुम्हारा स्वागत करूँगा।

विधाय शीघ्रं समरेऽथ सर्वथा. स-मान ! ते दुर्मद-मान-मर्दनम्।
तथा समुन्मूल्य कुलैक-कण्टकं, ततः कृतार्थो भविताऽस्मि भूतले ॥

अन्वय—हे स-मान ! अथ समरे सर्वथा ते दुर्मदमानमर्दनं शीघ्रं विधाय तथा कुलैककण्टकं समुन्मूल्य ततः भूतले कृतार्थः भविताऽस्मि।

शीघ्र ही समर भूमि में हर प्रकार के दुरभिमान पूर्ण तुम्हारा मान मर्दन कर और कुल कण्टक को समूल नष्ट करके धरती तल पर कृतार्थं बनूँगा ।

प्रताप-वाक्य-क्रकचेन मानवान्, निकृत्तमर्मा गमनोद्यतोऽभवत् ।
यदैव, केनापि कटु-प्रलापिना, वचस्तदैवेत्थमभाणि दुःसहम् ।।

अन्वय—यदैव प्रतापवाक्यक्रकचेन निकृत्त–मर्मा (सः) मानवान् गमनोद्यतः अभवत् तदैव केनापि कटु-प्रलापिना इत्थं दुःसहं वचः अभाणि ।

प्रतापसिंह के वाक्य रूपी आरे से छिन्न मर्म (हृदय) वह मानी जैसेही जाने के लिए उद्यत हुआ तभी किसी कटुभाषी ने इस प्रकार दुःसह वचन कहा—

अथाग्रहो मे भवते पुनः पुनः, सहैव नेयो भगिनीश्वरोऽपि सः ।
रणे हि दृष्ट्वा भवतः पराक्रमं, प्रसन्नचेता स महान् भविष्यति ।।

अन्वय—अथ भवते पुनः पुनः मे आग्रहः (यद्) स भगिनीश्वरः अपि सहैव नेयः । हि सः रणे भवतः पराक्रमं दृष्ट्वा महान् प्रसन्नचेता भविष्यति ।

आप से मेरा बार-बार आग्रह है कि अपने साथ ही भगिनीपति को भी अवश्य ले आना रण भूमि में आपका पराक्रम देखकर वह महान् भी प्रसन्न हो जायेगा ।

समन्ततः सन्तत-वाक्शरार्दितो, मुहुर्मुहुर्भोगिनिभो विनिःश्वसन् ।
करेण सम्पीड्य करं व्यथाऽऽकुलः, ससर्प दिल्लीनगरं स 'मान' वान् ।।

अन्वय—समन्ततः सन्ततवाक्शरार्दितः भोगिनिभः मुहुर्मुहुः विनिःश्वसन् व्यथा-कुलः मानवान् सः करेण करं सम्पीड्य दिल्लीनगरं ससर्प ।

चारों ओर से वाक्य रूपी वाणों द्वारा सर्वथा पीड़ित होकर सर्प की भाँति बार-बार श्वाँस छोड़ता कष्टाधिक्यवशात् अपने हाथ से हाथ को पीडित कर (हाथ मलकर) वह मानी दिल्ली नगर के लिए प्रस्थान किया ।



## राणा-रणघोषणा

इतःपरं मान-मतं विचार्य सः, युगान्तकालाग्निसमः समुज्ज्वलन् ।
समस्त-सामन्त-जने जनेश्वरः समुज्ज्वलद्वह्नि–शिखोपमोऽब्रवीत् ।।

अन्वय—इतः परं मानमतं विचार्य युगान्तकालाग्निसमः समुज्ज्वलन् समुज्ज्वलद्वह्निशिखोपमः सः जनेश्वरः समस्त—सामन्तजने अब्रवीत् ।

इसके अनन्तर मानसिंह की मनोदशा को विचार (समझ) कर युगान्तकालीन अग्नि (प्रलयाग्नि) के सदृश दहकते हुए उस जनेश्वर (नृप राणाप्रताप) ने सभी सामन्त जनों से प्रदीप्त अग्नि की शिखा के समान (ओजस्वी वाणी में) कहा—(जिस प्रकार प्रदीप्ताग्नि की शिखा में दहन-शक्ति का सहज आभास होता है उसी प्रकार उस समय प्रताप की वाणी में प्रतीत हो रही थी ।)

अये ! स्वदेशोन्नतये धृतासवोऽस्त्ययं जनो वक्तुमना मनागतः ।
हृदि स्वकीये विलिखन्तु मद्वचः, स्वशक्तिराद्या शुचि-धर्म-साधिका ॥

अन्वय—अये ! स्वदेशोन्नतये धृतासवः अयं जनः मनाग् वक्तुमना अस्ति । अतः स्वकीये हृदि मद्वचः विलिखन्तु (यद् अस्माकं), स्वशक्तिः आद्या शुचिधर्म-साधिका (अस्ति) ।

स्वदेश की उन्नति के लिए प्राण धारण करनेवाले ! यह जन आप से कुछ कहना चाहता है अपने-अपने हृदय में मेरा वचन अंकित कर लें, हमारे पवित्र धर्म को पूर्ण करनेवाली आद्य साधिका अपनी शक्ति है ।

न किं नु भूयो भविता समुन्नतिर्न दासता नस्त्वरितं गमिष्यति ।
वदन्तु शीघ्रं जननी च जन्मभूः, न किं पुनः सौख्यमयी भविष्यति ॥

अन्वय—किं नु भूयः समुन्नतिः न भविता ? (किं) नः दासता त्वरितं न गमिष्यति ? जननी जन्मभूः च पुनः शीघ्रं सौख्यमयी न भविष्यति किम् ? (इति भवन्तः) वदन्तु ।

क्या पुनः समुन्नति सम्भव नहीं है ? क्या हमारी दासता शीघ्र ही समाप्त नहीं हो जायगी ? शीघ्र आप सभी जन बोलें—क्या हमारी यह जन्मभूमि पुनः सुख बरसानेवाली न होगी ?

पपौ रणे यश्च किलोष्ण-शोणितं, नृ-मूर्ति-धारी यम-लोक-शासनः ।
स भीमनामा रिपु-रक्त-रञ्जनः, न किं कुले नः प्रबभूव वीर-राट् ॥

अन्वय—नृमूर्तिधारी यमलोकशासनः यः रणे उष्णशोणितं पपौ किल, सः रिपुरक्तरञ्जनः भीमनामा वीरराट् नः कुले न प्रबभूव किम् ।

रणभूमि में जिसने शत्रुओं के उष्ण रक्त का पान किया वह नररूपधारी

यमराज-भीम जो शत्रु रक्त से सन्तुष्ट होता था, क्या वीरशिरोमणि वह हमारे कुल में नहीं जन्मा ? (भीम जैसे महाप्रतापी पुरुष के कुल में मैंने भी जन्म ग्रहण किया है, अतः शत्रुओं को नष्ट करना परम धर्म है ।)

प्रशस्ततेजा अनघो दृढ़व्रतः, स राघवः किं न मदीय-वंशजः ।
निहत्य युद्धेकिल योऽत्र रावणं, महीतलं चारु चकार शीतलम् ॥

अन्वय—प्रशस्ततेजाः अनघः दृढ़व्रतः सः राघवः किं मदीयवंशजः न यः अत्र युद्धे रावणं निहत्य महीतलं चारु शीतलं चकार किल ।

प्रशस्त तेजवाले पवित्र और दृढ़व्रती वह राम क्या हमारे वंशज नहीं थे ? जिन्होंने इसी भूमि पर युद्ध में रावण का वध करके धरती तल को सुरम्य एवं शीतल कर दिया ।

मदीयदेशोऽस्म्यहमेव भूपतिः, प्रसिद्धमेतद्वसुधातलेऽस्त्यलम् ।
कथं न लज्जाऽहह मां न बाधते, यदद्य देशो यवनैर्वशीकृतः ॥

अन्वय—(अयं) मदीयदेशः (अस्ति) अहम् एव भूपतिः अस्मि (इति) एतत् वसुधातते अलं प्रसिद्धम् अस्ति । अहह ! कथं मां लज्जा न बाधते यत् अद्य (अयं) देशः यवनैर्वशीकृतः ।

हमारा देश है, हम इसके नृपति (शासक) हैं, यह पृथ्वीतल पर प्रसिद्ध है मुझे आज लज्जा और कष्ट क्यों न पहुँचे, जो यह देश यवनों के अधिकार में चला गया है ।

अघौघभाराज्जनता नताऽधुना, वधू-जने चापि विलासिताऽसिता ।
अहो दुरन्तः किल काल-चङ्क्रमः, यदद्य सर्वत्र विपत्त्युपक्रमः ॥

अन्वय—अधुना जनता अघौघभारात् नता वधूजने अपि विलासिता असिता च । अहो कालचङ्क्रमः दुरन्तः किल यद् अद्य सर्वत्र विपत्त्युपक्रमः अस्ति ।

दुष्कृत्यों के भार से बोझिल जनता इस समय नम्र (आत्म-शक्ति क्षीण है) हो गयी है, युवतियों में भी कलुषमयी विलासिता व्याप्त (घर कर गयी) है । कष्ट का विषय है, काल की गति कठिन होती है, इसी कारण आज सर्वत्र विपत्ति कीं ही भूमिका दिखायी पड़ रही है ।

महोच्चलद्वारणवैरि-वारणाः !, कथं नु यूयं किल शान्त-मानसाः ।
पतङ्गवद् वह्निमुखं विविक्षवो, न यावदेते यवना दहन्त्यलम् ॥

अन्वय—हे महोच्चलद्वारणवैरिवारणाः ! यूयं कथं नु शान्तमानसाः किल। वह्निमुखं पतङ्गवद् त्रिविक्षवो एते यवनाः यावत् अलं दहन्ति ।

उन्मत्त हाथी के समान शत्रु को परास्त करनेवाले आप लोग यह शान्तचित्त क्यों हैं ? कीड़े के समान अग्नि में कूदने (राजपूतों की क्रोधाग्नि ) के लिए उमड़े ये यवन जब तक भस्म (विनष्ट) नहीं हो जाते शान्त नही बैठना चाहिए ।

प्रियो यदि स्याद् भगवान् महामहाः, स एकलिङ्गोऽमर-वृन्द-वन्दितः ।
प्रिया यदि स्याल्ललना पवित्रता, प्रियो यदि स्याद् भवतामयञ्जनः ॥

अन्वय—यदि अमरवृन्दवन्दितः महामहाः सः भगवान् एकलिङ्गःप्रियः स्यात्, यदि ललना–पवित्रता प्रिया स्यात् यदि अयं जनः भवताम् प्रियः स्यात् ।

यदि देवगणों द्वारा वन्दित महाभगवान् एकलिङ्ग प्रिय हैं, यदि स्त्री जनों की पवित्रता प्रिय है एवं यदि आप सव को यह जन प्रिय है—

तदद्य सार्धं मयका रणाङ्गणे, प्रमत्तभावा समरे धृतायुधाः ।
विधाय मानङ्गत—मान—मर्दनं, स्ववीरभूमिं कलयन्तु सर्वथा ॥

अन्वय—तदद्य मयका सार्द्धं रणाङ्गणे प्रमत्तभावाः धृतायुधाः (भवन्तु) समरे मानङ्गतमानमर्दनं विधाय सर्वथा स्ववीरभूमिं कलयन्तु ।

तो आज युद्ध में शस्त्र धारण कर तदर्थ उन्मत्त भाव में भरे मेरे साथ रणभूमि में अभिमानी मानसिंह का अभिमान चूर्ण कर अपनी वीर भूमि को हर दशा में जानने पहिचानने का यत्न करें । (हमारी जन्मभूमि के वीर पुरुषों का धर्म रहा है कि उस पर आँख उठानेवाले अभिमानी का गर्व नष्ट करें । )

धिग्ब्राह्मणं तमथ यः श्रुति-मन्त्र-हीनः, धिक् क्षत्रियं तमथ यः समरेऽतिदीनः ।
धिग् वैश्यमर्थिजन-शोषणमात्र-पीनं, शूद्रं च धिक् सुजनसेवकताविहीनम् ॥

अन्वय—अथ तं ब्राह्मणं धिक् यः श्रुति–मन्त्रहीनः, अथ तं क्षत्रियं धिक् यः समरे अतिदीनः, अर्थिजनशोषणमात्रपीनं वैश्यं धिक्, सुजनसेवकताविहीनं शूद्रं च धिक् (अस्तु)

वेद-मन्त्र से रहित (जिसकी आस्था वेद मन्त्रों में नहीं है ) ब्राह्मण, रणभूमि में दीनता के भाव लानेवाले क्षत्रिय, धन चाहनेवाले जनों का शोषण करके धनी (मोटे) बने वैश्य, एवं जो सज्जनों की सेवा से विमुख रहे उस शूद्र को धिक्कार है ।

तिष्ठन्तु ते निज-गृहे ललना-विलासाः, ये वारुणी-विषय—वञ्चकतैकदासाः ।
ये जन्मनैव खल-कर्म समर्थयन्ति, प्रोच्चैर्बलं शुचि-कुलं च कदर्थयन्ति ॥

अन्वय—ललना-विलासाः ये वारुणीविषयवञ्चकतैकदासाः ( सन्ति ) तथा च ये जन्मना एव खलकर्म समर्थयन्ति, प्रोच्चैर्बलं शुचिकुलं च कदर्थयन्ति (अधुना) ते निजगृहे तिष्ठन्तु ।

युवति-जनों के विलास में रत रहनेवाले वे सब जन जो मदिरा और विषयभोग की ठगी के दास हैं; जो जन्म से ही खलकर्म (दुष्टता के कृत्य) के समर्थक हैं, तथा बल और कुल की पवित्रता को निन्दित करते हैं ( पवित्र कुल की प्रतिष्ठा में आस्थावान् नहीं है ) अपने घर में पड़े रहें ।

आयातु स प्रकटयन् बलमत्युदारं कर्तुं समर्थं इह यो व्रतमासिधारम् ।
क्रीडास्थलीव किल यं समरस्थली स्यात्, किं वा विषाद इह यस्य कृते प्रसादः ॥

अन्वय—यः इह आसिधारं व्रतं कर्तुं समर्थः (स्यात्) यं किल समरस्थली क्रीड़ास्थली इव स्यात् किंवा इह विषादः यस्य कृते प्रसादः (अस्ति) सः अत्युदारं बलं प्रकटयन् आयातु ।

अपने बल-पौरुष को प्रकट करते हुए वह आये जो असिधार व्रत (तलवार की धार पर चलना) लेने में समर्थ हो जिसके लिए रण-भूमि क्रीड़ाभूमि के सदृश प्रतीत हो अथवा जिसके लिए विषाद भी प्रसाद के समान हो (जो कष्ट में भी प्रसन्न रहे ) ।

आयातु स प्रबलवानिह साऽभिमानं, कृत्वा स्वदेश-चरणे मृदु-मौलि-दानम् ।
वक्षः क्षताज्जनित-शोणित-बिन्दुभिर्यः, निश्शङ्कमङ्कयतु गौरव-गर्व-गानम् ॥

अन्वय—यः प्रबलवान् स्वदेशचरणे मृदुमौलिदानं कृत्वा वक्षःक्षतात् जनित-शोणितबिन्दुभिः निश्शङ्कम् गौरव—गर्व—गानम् अङ्कयतु, सः इह साभिमानम् आयातु ।

बल-पौरुषवाला वह आये जो अभिमान सहित स्वदेश के लिए अपने शीश का दान किया हो, जो विदीर्ण छाती से निकलते रक्त-बिन्दुओं द्वारा नि.शंक-हृदय निज गौरव का सगर्व गींत अंकित कर सकता है ।

सिन्दूरबिन्दुरिव भारत-भूमि-भालात्, 'मेवाड़' एष पवनैर्यवनैर्विलुप्तः ।
भूयोऽपि तं किल तथा परिरञ्जयेद्यः, आयातु तत्कृत इदं प्रणतं शिरो मे ॥

अन्वय—एषः मेवाड़ः सिन्दूरबिन्दुः इव भारतभूमिभालात् यवनैः पवनैः विलुप्तः। यः किल भूयोऽपि तं तथा परिरञ्जयेत् (सः) आयातु। तत्कृते मे इदं शिरः प्रणतम् (अस्ति)।

भारत-भूमि के मस्तक पर सिन्दूर-विन्दु के सदृश मेवाड़ आज यवन रूपी पवन द्वारा विलुप्त कर दिया गया है, पुनः उसे पूर्ववत् जो प्रतिष्ठित करे वह आये, उसके लिए यह मेरा सिर झुका हुआ है (वह वन्दनीय है)।

धन्याऽस्ति तेन जननी जनकोऽप्यनन्यो, वंशश्च तेन सुसमस्त-समस्त-तापः।
कीर्तिश्च तस्य भुवने भुवनैकभूषा, प्राणान् समुत्सृजति यो निज-देश-हेतोः॥

अन्वय—तेन जननी धन्या अस्ति, जनकः अपि अनन्यः (अस्ति) वंशश्च तेन सुसमस्त-समस्त-तापः (अस्ति), भुवने तस्य कीर्तिः भुवनैकभूषा च (अस्ति), यः निज-देशहेतोः प्राणान् समुत्सृजति।

उससे जननी धन्य और जनक अनन्य (एक मात्र गौरवशाली) और उसका कुल समस्तकष्टों से मुक्त हो गया, उसका यश जगती-तल में एक मात्र शोभा (जगत् के लिए आभूषण) है, जो अपने देश के लिए प्राणों का उत्सर्ग करता है।

स्वच्छन्द-मन्द-गमना यवनाः गजाऽऽभाः, नन्दन्तु तावदिह नन्दन-कानने मे।
वक्षो-विदारणकरं निनदं विधाय यावन्न सर्पति महामृगराज एषः॥

अन्वय—वक्षोविदारणकरं निनदं विधाय यावद् एषः महामृगराजः न सर्पति तावद् गजाऽऽभा स्वच्छन्द-मन्द-गमनाः यवनाः मे इह नन्दनकानने नन्दन्तु।

नन्दन-कानन रूपी हमारी भूमि पर ये गजसदृश यवन तभी तक स्वतंत्र-मन मन्दगति से विचरण करें जब तक यह महासिंह वक्ष को विदीर्ण कर देनेवाला निनाद (गर्जना) करके प्रस्थित नहीं होता (पहुँच नहीं जाता)। अर्थ यह है कि हम राजपूतों की हुंकार सुनते ही ये उद्धत यवन एक क्षण भी नहीं रुक सकते।

अद्यापि पश्यतु जगद्रघुवंश-वीर्यं, ग्रन्थेषु मत्कृत इदं विलिखन्तु विज्ञाः।
एकोऽपि कोपिततमः कतमः परेण, दिल्लीश्वरेण समरं समरीरचद्यत्॥

अन्वय—जगत् अद्यापि रघुवंशवीर्यं पश्यतु। विज्ञाः ग्रन्थेषु मत्कृते इदं विलिखन्तु यत् कोपिततमः कतमः एकः अपि परेण दिल्लीश्वरेण समरं समरीरचत्।

आज भी संसार रघुवंश (रघुवंश में जन्म लेनेवाले वीरों) का पौरुष देखे, विद्वान् ग्रन्थों में मेरे लिए इस प्रकार लिखें किसी एक ने एकाकी रहने पर भी क्रुद्ध

किये जाने के कारण शक्ति से भ्रमित ( बल के गर्व में चूर ) दिल्लीश्वर जैसे शत्रु से युद्ध की रचना कर दी।

तदैव सैन्ये सहसा समाविशत् तडित्प्रभः साहस एव मूर्तिमान्।
जयेति शब्देन सरोष—घोषणो, रवोऽभवच्छस्त्र–ततिप्रताडितः ॥

अन्वय—तदा एव सैन्ये सहसा एव तडित्प्रभः मूर्तिमान् साहसः समाविशत् जयेति शब्देन सरोष— घोषणः शस्त्रततिप्रताडितः रवः अभवत्।

उसी सेना में विद्युत् ज्योति-सी बिखराते हुए ऐसा प्रतीत हुआ मानो साहस स्वयं रूपधारी होकर उपस्थित हो गया एवं जय शब्द के साथ क्रोधावेग में की गयी घोषणा तथा शस्त्र-समूह का स्वर गूँज उठा।

स 'एकलिङ्गो' भगवाञ्जयत्वलम्, जयत्वलं भारत—मा महीयसी।
प्रतापसिंहो विजयी जयत्वलं, जयत्वलं तद्बलवत्तरं बलम् ॥

अन्वय—भगवान् एकलिङ्गः अलं जयतु महीयसी भारत-मा अलं जयतु विजयी प्रतापसिंहः अलं जयतु तद्बलवत्तरं बलम् अलं जयतु।

उस एकलिंग भगवान् की जय हो महा महिमाशालिनी भारत जननी की, विजयी प्रतापसिंह की और उसके अद्भुत बल की जय हो !



## रणाङ्गणे राणाप्रतापः

प्रतापसिंहस्य महोत्तमं यशः, रिपूच्छलच्छोणित—शोणलेखनैः।
शिलोच्चये भाति यदीयकेऽङ्कितं, प्रिया न कं सा किल 'हल्दिघाटिका' ॥

अन्वय— यदीयके शिलोच्चये रिपूच्छलच्छोणितशोणलेखनैः अङ्कितं प्रतापसिंहस्य महोत्तमं यशः भाति, सा किल हल्दिघाटिका कं न प्रिया ?

जिसके शिलाखण्डों पर शत्रु के गिरते रक्त से रक्तिम (लोहित) लेख द्वारा लिखित प्रतापसिंह का महान् यश सुशोभित है वह हल्दीघाटी किसे प्रिय नहीं है ? अर्थ कि सब के लिए प्रिय है।

'अरावली' यां समवाप्य सुन्दरी, सुहल्दिघाटी प्रथिता रणस्थली।
परस्परं सा भुवि योद्धुकामतः, प्रवर्तमानोभय—पक्षतोऽभवत् ॥

अन्वय—यां समवाप्य सुहल्दिघाटीप्रथिता सुन्दरी सा रणस्थलीं अरावली भुवि उभयपक्षतः परस्परं योद्धु कामतः प्रवर्त्तमाना अभवत् ।

सुन्दरी अरावली जिसको प्राप्त कर हल्दीघाटी रणस्थली के रूप में प्रसिद्ध हुई, वह जहाँ दोनों पक्ष युद्ध करने की इच्छा से समुपस्थित हुए। (अरावली पर्वत का नाम है, उससे लगे हुए भाग को हल्दीघाटी संज्ञा दी गयी, यही कवि ने इस रूप में अंकित किया)।

क्व लक्षशो भारतभाररूपिणः, प्रकामचाराः यवना मदोद्धताः।
क्व जन्मभू-भार-निवारणे रताः, जनाः कियन्तो धृत-सङ्गर-व्रताः ॥

अन्वय—मदोद्धताः प्रकामचाराः भारत-भार-रूपिणः लक्षशः यवनाः क्व ? (तथा च) जन्म-भू-भार-निवारणे रताः धृतसङ्गर-व्रताः कियन्तः जना क्व ?' (द्वौ क्वौ महदन्तरं सूचयतः)।

कहाँ भारत-भूमि पर भार स्वरूप स्वेच्छाचारी, बल से गर्वित लक्ष संख्यावाले यवन एवं कहाँ युद्धव्रती, जन्मभूमि का भार दूर करने में तत्पर थोड़े से राजपूत जन।

तथापि जातं समरं तथाविधं, यदद्यकालेऽपि तदुल्वण-प्रभाम्।
विलिख्य मौनं स्वशिलातलेष्वलं, चिरादहो रौति 'अरावली' स्थली ॥

अन्वय—तथापि तत् समरं तथाविधम् जातम् यद् अहो अद्यकाले अपि अरावली-स्थली स्वशिलातलेषु अलम् उल्वणं प्रभां विलिख्य चिरात् मौनं रौति।

तथापि वह युद्ध इस प्रकार का हुआ कि आज भी उसकी कथा निर्बाध रूप (उज्ज्वल) में प्रकाशित हो रही है एवं जिसकी कथा को मौन-मौन अपनी शिलाओं पर अंकित किये हुए युगों से वह अरावली, मुखरित हो रही है। (जिसके कण-कण में उस युद्ध की गाथा समायी हुई, स्मरण दिलाया करती है।)

जनुःप्रदात्री जननी वसुन्धरा, जल—प्रवर्षा—मिषतो रणस्थले।
निरीक्ष्य सूनून् मरणाय तत्परान्, सुतान् परावर्तयितुं मनोऽकरोत् ॥

अन्वय—जनुः प्रदात्री जननी वसुन्धरा रणस्थले (स्व) सूनून् मरणाय तत्परान् निरीक्ष्य जलप्रवर्षामिषतः (तान्) सुतान् परावर्त्तयितुं मनः अकरोत्।

जन्म देनेवाली माता पृथ्वी ने अपने पुत्रों को युद्ध-भूमि में मरण के लिए तत्पर देखकर, जल-वर्षण के बहाने उन्हें विमुख करने (लौटाने) की इच्छा, प्रकट की।

स—रक्तमासाञ्चितसद्वसुन्धरा—निरीक्षणे    हाऽक्षमतामुपागतः।
कुयुद्धतः पूर्वमहो महोनिधिः, निमीलिताक्षःसहसाऽभवद्रविः॥

अन्वय—हा महोनिधिः रविः सरक्तमासाञ्चितसद्वसुन्धरानिरीक्षणे अक्षमताम् उपागतः। अहो (सः) कुयुद्धतः पूर्वं सहसा निमीलिताक्षः अभवत्।

वर्षा हो चुकी थी, कीचड़ और वीरों के रक्त-मांस से रणस्थली लथपथ हो गयी, सुभग धरती ऐसी स्थिति में भलीभाँति निरीक्षण करने में असमर्थ होने लगी, कारण पृथ्वी पर इस अभूतपूर्व युद्ध को देखकर आश्चर्यचकित हो, परम तेजस्वीं स्वयं सूर्य ने अपनी आँखें बन्द कर लीं। (सन्ध्या सी होने लगी, दोनों सेनाओं के बहु-संख्यक जनों एवं अश्व, रथ, पैदल के पदाघातों से उड़ी धूल ने अन्धकार की स्थिति कर दी)।

तदैव युद्धोदयकाल-सूचकः, समुत्थितो दुर्धर—दुन्दुभि—ध्वनिः।
क्षणेन सा सुन्दर—हल्दिघाटिकाऽतिभीमहुङ्कारमयी तदाऽभवत्॥

अन्वय—तदैव युद्धोदयकालसूचकः दुर्धरदुन्दुभिध्वनिः समुत्थितः। तदा सुन्दर-हल्दिघाटिका क्षणेन अतिभीमहुङ्कारमयी अभवत्।

उसी समय युद्ध आरम्भ की सूचना देनेवाले नगाड़े की भयंकर ध्वनि गूँज उठी एवं क्षणभर में वह सुन्दर हल्दीघाटी भीषण हुँकारों से पूर्ण हो गयी। (दोनों ओर की सेनाओं की ललकार सुनायी पड़ने लगी)।

तदैव सैन्ये रण—रोष-लक्षणो, विलक्षणो वैरिचमूनिषूदनः।
स वीरताया निकषोपलोऽमलो, ननाद वेगेन निसर्ग—निष्ठुरः॥

अन्वय—तदैव रण-रोष-लक्षणः वैरिचमूनिषूदनः, वीरतायाः निकषोपलो निसर्ग निष्ठुरः विलक्षणः अमलः सः सैन्ये वेगेन ननाद।

उसी क्षण युद्धावेश में क्रोध से सनाथ शत्रु-सैन्य-विनाशक, वीरता का निर्मल-निकष, पत्थर सदृश (शौर्य के समग्र भावों से युक्त) स्वभावतः क्रूर उस असाधारण (वीर प्रतापसिंह) ने तीव्र गर्जना की।

भुवं भृकुट्या भृशमाविभीषयन् भुजङ्गभीमोऽमितभूति—भूषितः।
विधातुकामः प्रलयं भयङ्करं, लयङ्करः किं भव एव भात्ययम्॥

**अन्वय**—किम् अयं भृकुट्या भुवं भृशम् आविभीषयन्, भुजङ्गभीमः अमित भूति-भूषितः भयङ्करं प्रलयं विधातुकामः लयङ्करः भवः एव भाति ?

(महाराणा प्रताप के युद्ध-भूमि में उपस्थित होने पर उनके क्रिया-कलापों का वर्णन) अपनी भृकुटी विलास से धरती को भयभीत करते हुए, सर्पों के कारण भयंकर, विशाल ऐश्वर्य से शोभित, प्रलय करने के इच्छुक क्या यह लय करनेवाले स्वयं शंकर शोभा पा रहे हैं ? (कवि ने प्रतापसिंह को प्रलयंकर के रूप मे चित्रित किया है )

सुरासुराणामथवाऽत्र सङ्गरे, स्ववर्गसम्पाद्यविधेः सहायकः।
समागतः किं सहसा स-सम्भ्रमः, सशस्त्र एषः सुर सैन्य-नायकः ॥

**अन्वय**—अथवा सुरासुराणां अत्र सङ्गरे सहसा स्ववर्गसम्पाद्यविधेः सहायकः ससम्भ्रमः सशस्त्र एषः सुरसैन्यनायकः समागतः किम् ।

अथवा देव और राक्षसों के महासमर के बीच अपने पक्ष के कार्य सम्पादन क्रिया में सहायक शस्त्रों से सज्जित क्या यह देव सेनापति ही स्वयं भ्रम वश अचानक आ गये हैं ? (महाराणा प्रताप की वेश-भूषा एवं युद्ध कौशल को देखकर देवसेनापति का आभास हो रहा था ।)

प्रहर्त्तुकामोऽरि-बलं सुविह्वलं, स—विग्रहो विग्रह एष साऽऽग्रहः।
स्ववज्र-निर्घोष-पुरस्सरोऽथवा, विराजते वज्र—धरं विडम्बयन् ॥

**अन्वय**—अथवा सुविह्वलं अरिबलम् प्रहर्त्तुकामः वज्रधरं विडम्बयन् स्ववज्र-निर्घोषपुरस्सरः साग्रहः सविग्रहः एषः विग्रहः विराजते ।

अथवा क्षुब्ध होकर शत्रु-सेना पर प्रहार करने की इच्छा से यह युद्ध स्वयं प्रतिमूर्ति होकर उपस्थित हो गया है जो अपनी भीषण गर्जना के साथ वज्रधारण करनेवाले इन्द्र-स्वरूप होकर शोभित हो रहा है ।

मदोत्कटो मानि–महत्व–मर्दनः, समुष्टिबन्धो जनमारण - व्रती।
मुहूर्तमात्रस्य कृते महीङ्गतो, महाङ्गधारी किमयं महार्जुनः ॥

**अन्वय**—मदोत्कटः मानि-महत्व–मर्दनः जनमारण—व्रती समुष्टिबन्धः अयं ( महाराणाप्रतापः ) किम् मुहूर्त्तमात्रस्य कृते महीङ्गतः महाङ्गधारी महार्जुनः ( अस्ति )।

अभिमान के कारण उन्मत्त मानियों का महत्त्व नष्ट करनेवाला मूठी बाँधे हुए शत्रुजन को मारने का व्रत लिए एक क्षण में (क्षण भर के लिए) विशाल अंगों को धारण किये क्या यह कार्तवीर्य अर्जुन पृथ्वी पर ( अवतरित होकर ) शोभित हो रहा है ?

## कुन्त-कौटिल्यम्

मनस्वि-मानोन्नत-मौलि-खराडकः, स्वदीप्ति-सम्भासित-सर्वदिङ्मुखः ।
प्रतापहस्ते प्रतपन् प्रतापवान्, न कस्य कुन्तः कृतवान् प्रकम्पनम् ॥

अन्वय—मनस्विमानोन्नतमौलि—खण्डकः, स्वदीप्तिसम्भासितसर्वदिङ्मुखः प्रतापहस्ते प्रतपन् प्रतापवान् कुन्तः कस्य प्रकम्पनम् न कृतवान् ?

अभिमान से ऊँचा किये हुए मस्तक को खण्डित करनेवाला अपनी चमक से सभी दिशाओं को ज्योतिर्मय बनानेवाला, प्रतापसिंह के हाथ में दमकते हुए प्रतापशाली भाले ने किसे नहीं कँपा दिया (सभी उसे देखकर काँप उठते थे ) ।

रणाङ्गणे कः खलु वीक्ष्य तं भयाज्जहावसून्नैव भटोद्भटोऽपि सन् ।
न तेजसा तत्प्रभवेरण केऽभवन् स्थिताः सुदूरेऽपि विदीर्णवक्षसः ॥

अन्वय—भटोद्भटोऽपि सन् रणाङ्गणे तम् वीक्ष्य भयात् कः खलु असून् न जहौ । सुदूरेऽपि स्थिताः तत्प्रभवेण तेजसा के विदीर्णवक्षसः न अभवन् ?

रणभूमि में महान् से महान् किस वीर ने भी उसे देखकर भय के कारण अपने प्राण नहीं त्याग दिये ? दूर रहने पर भी उनके तेज (दमक) के प्रभाव से किसका वक्ष विदीर्ण नहीं हो गया ? (दूर से ही उसकी दमक के कारण शत्रु का वक्ष विक्षत हो जाता था ) ।

तृणीकृतास्त्रः स तडित्ततिप्रभः, तुरुष्कजान् तुच्छतमान्प्रताडयन् ।
त्विषामधीशस्तरसाऽथ ताराडवे, त्रिलोचनस्याऽनुचराभ आबभौ ॥

अन्वय—अथ तृणीकृतास्त्रः तडित्ततिप्रभः, तुच्छतमान् तुरुष्कजान् प्रताडयन् त्विषामधीशः सः तरसा ताण्डवे त्रिलोचनस्य अनुचराभः आवभौ ।

अस्त्रों को तृण के समान व्यर्थ करते, विद्युत की-सी ज्योति बिखेरते सूर्य की-सी तीव्रगति में गतिमान् उसने तुच्छ यवनों का आघात करते हुए शंकर के अनुचर (शिव के गणों) के समान शोभा को धारण किया।

निमेषमात्रेऽगणितान् विनाशयन्, निशाचराऽऽभान् यवनान् निरन्तरम्।
निभालयन् नाकनिकेतनाऽतिथीन्, ननर्त्त नासीर-गतो नटेन्द्रवत्॥

अन्वय—निमेषमात्रे अगणितान् निशाचराभान् यवनान् निरन्तरम् विनाशयन् नाकनिकेतनाऽतिथीन् निभालयन् नासीर-गतः नटेन्द्रवत् ननर्त्त।

क्षण भर में राक्षस-सदृश अनेक यवनों को निरन्तर नष्ट करता, वह सेना के मध्य उन्हें, स्वर्ग-अतिथि के रूप में देखता हुआ शंकर की-सी नृत्य लीला प्रकट करने लगता।

सुधाम धाम्नां रणधीर—धर्षणो, धुतारि-पक्षो द्विजधर्म-पक्षपाः।
ध्रुवं धरा—धेनुक—धीमतां कृते, कृतेश एष श्रित-वेष—पेशलः॥

अन्वय—धाम्नां सुधाम रणधीर-धर्षणः, धुतारिपक्षः, द्विजधर्मपक्षपाः, एषः धरा-धेनुक-धीमतां कृते श्रितवेषपेशलः ध्रुवं कृतेशः (एव)।

अत्यन्त तेजस्वी, रणधीर जनों को तिरस्कृत करनेवाले, शत्रु पक्ष का नाश करनेवाले एवं क्षत्रिय पक्ष के पोषक, निश्चित ही धरती पर धेनु तथा विद्वानों के ही हितार्थ यह समुज्ज्वल सम्मानित वेश तुमने धारण किया।

सुरक्त—सत्केशर—रङ्ग—रञ्जितः, सुचामरश्चञ्चल-चन्द्रहासभः।
सुधीर—हस्त-व्यजितः सहस्रधा, जहार हहो! हृदयं न कस्य सः॥

अन्वय—सुरक्त-सत्केशररङ्गरञ्जितः सुचामरः चञ्चलचन्द्र-हासभः. सुधीर-हस्तव्यजितः सः कस्य हृदयं सहस्रधा न जहार?

रक्तसना होकर मोहक केशर रंग से रंजित, सुन्दर चामर (भाला लहराता है अतः चामर कहा गया) चमकीले तलवार की-सी आभा विखेरते, सुधीर (राणाप्रताप) के हाथों द्वारा विविध रीतियों से चलकर तुमने, वह कौन है जिसके हृदय को नहीं कंपा दिया।

प्रभञ्जनस्याऽपि जवं विभञ्जयन्, प्रदर्शयन् भीममसीमसाहसम्।
प्रताप-कुन्तः कुटिलान् प्रकर्तयन्, न कं समातङ्कितवानशङ्कितः॥

अन्वय—प्रतापकुन्तः प्रभञ्जनस्यापि जवं विभञ्जयन् भीमम् असीमसाहसम् प्रदर्शयन् कुटिलान् प्रकर्त्तयन् अशङ्कितः (सन्) कं न समातङ्कितवान् ?

झंझावात की भी गति का अतिक्रमण करते, अत्यन्त भीषण साहस दिखाते हुए दुष्टजनों को काटते हुए निर्द्वन्द्व होकर प्रतापसिंह के भाले ने किसे भयभीत नहीं कर दिया ?

अलक्षि विद्युत्फलकोपमः परैरतर्कि तर्ककधनैर्यमोऽपरैः ।
अमानि कैश्चिच्च पलायने परैः, सुदर्शनो दर्शनमात्र–कातरैः ।।

अन्वय—(सः प्रतापकुन्तः रणे) परैः विद्युत्फलकोपमः अलक्षि अपरैः तर्ककधनैः यमः अतर्कि दर्शनमात्रकातरैः पलायने परैः कैश्चित् सुदर्शनः (चक्रः) अमानि च ।

किसी ने विद्युत्फलक के सदृश उसे देखा तो किसी ने उसे (भाले को) तर्क करके यमराज के रूप में मान लिया और दर्शनमात्र से भयभीत होकर भागते हुए किसी ने उसे सुदर्शन (चक्र) समझ लिया ।

समुज्ज्वलोऽप्यप्रिय–रक्त-रञ्जनो, विलम्बिदेहोऽप्यविलम्ब—घातकः ।
अथैकलः सन्नपि पञ्चतामयन्नयं जयं कस्य न चेतसोऽकरोत् ।।

अन्वय—समुज्ज्वलः (सन्) अपि अप्रियरक्तरञ्जनः विलम्बिदेहः (सन्) अपि अविलम्बघातकः, अथ एकलः सन् अपि पञ्चताम् अयन् अयम् ( सः प्रतापकुन्तः) कस्य चेतसः जयं न अकरोत् ।

उज्ज्वलवर्ण होकर भी शत्रु-रक्त से सना रक्तिम रंगवाला वह लम्बे आकार-वाला होने पर भी शीघ्र घात करनेवाला, अकेले ही पाँच का समूह-तुल्य उस भाले ने किसके हृदय को जीत नहीं लिया ?

व्यलोकि सीमातिग एष यैरलं, पुनर्न तैरेतददर्शि भूतलम् ।
स्वयम्प्रतापोऽपि चमच्चकार तां, विलोक्य कुन्तार्जित–सिद्ध–वीरताम् ।।

अन्वय—यैः एषः अलं सीमातिगः व्यलोकि तैः एतत् भूतलं पुनः न अदर्शि । प्रतापः अपि तां कुन्तार्जितसिद्धवीरतां विलोक्य स्वयं चमच्चकार ।

रणभूमि की सीमा में जिसने उसे एक बार देख लिया, बस पुनः दूसरी बार उसका दर्शन धरती पर न हुआ । यहाँ तक कि स्वयं प्रताप सिंह भी भाले द्वारा प्राप्त की गयी वीरता की सिद्धि को देखकर चमत्कृत थे (आश्चर्य मे पड़े रहे) ।

●

## चेतक–चङ्क्रमणम्

निशम्य राणा–कृत–कुन्त–टङ्कृतिं, स चेतकश्चारु चकार हुङ्कृतिम् ।
उदग्रवेगोच्छलदच्छ—केशरः, चचाल युद्धेऽप्यचलां प्रचालयन् ॥

अन्वय—स चेतकः राणाकृतकुन्तटङ्कृतिं निशम्य चारु हुङ्कृतिं चकार । (तथा च) उदग्रवेगोच्छलदच्छकेशरः (सः) युद्धे अचलाम् अपि प्रचालयन् चचाल ।

राणाप्रताप द्वारा की गयी भाले की टंकार सुनकर उस चेतक ने भी सुन्दर हुँकार किया एवं वह अपने उन्नत शिखर को उछाल कर (वेग से चलने के कारण उसकी गरदन पर स्थिर लम्बे-लम्बे बाल उछल रहे थे) पृथ्वी को आन्दोलित करते हुए युद्ध में चल पड़ा ।

प्रमत्त आशीविषवत् समन्धयन् निबन्धयँश्चापि महामतङ्गजान् ।
प्रतापसिंहाश्रित—पृष्ठभीषणः, रणाङ्गणे रिङ्गणमाततान सः ॥

अन्वय—प्रतापसिंहाश्रितपृष्ठभीषणः प्रमत्तः सः आशीविषवत् समन्धयन्, महामतङ्गजान् अपि निबन्धयन् रणाङ्गणे रिङ्गणम् आततान ।

विष के कारण उन्मत्त (मतवाले) सर्प के सदृश फूफकार करते, बड़े बड़े हाथियों को भी रौंदते अपने पृष्ठ पर प्रतापसिंह को प्रतिष्ठित किये हुए भीषण (भयानक), उसने रणस्थली में अपनी गति का संचार प्रारम्भ कर दिया ।

खुराग्रभागेण विदारयन् भुवं, निशामयँश्चाप्रियभैरवं रवम् ।
क्षणप्रभोत्पात–निपात–चञ्चलः, न कं चकाराऽऽर्त्ततरं स 'चेतकः' ॥

अन्वय—खुराग्रभागेन भुवं विदारयन् अप्रियभैरवं रवं निशामयन् च क्षण-प्रभोत्पातनिपातचञ्चलः सः चेतकः कम् आर्त्ततरं न चकार ।

खुर के अग्र भाग (खुराघात) से धरती को विदीर्ण करते (रौंदते हुए) अप्रिय और भयानक ध्वनि से हिनहिनाते एवं दूसरे ही क्षण उल्कापात के समान चंचल गति से चलकर उस चेतक ने किसे भयातुर दुःखी नही बना दिया ।

अलक्षिताऽशान्त–गतागतिः सदा, रणाग्निमध्ये तृण-पुञ्ज-दायकः ।
ननर्त्त वैरि—व्रज—मौलि—मण्डले, स मूर्तिधारी रणचक्रवक्रिमा ॥

अन्वय—अलक्षिताऽशान्तगतागतिः, रणाग्निमध्ये तृणपुञ्जदायकः मूर्तिधारी रणचक्रवक्रिमा सः सदा वैरिव्रजमौलिमण्डले ननर्त्त ।

वह कभी आँखों से ओझल हो जाता, कभी अशान्त (क्रुद्ध) गतिमान्, कभी एक स्थान पर स्थिर इस प्रकार प्रत्येक क्षण रणरूपी अग्नि में तृण राशि छोड़ता (युद्ध को भयानक बनाता) हुआ शत्रु पक्ष के श्रेष्ठ वीरों के समूह में चक्र के समान वक्र गति से चलता हुआ मूर्तिमान् 'चक्र' की प्रतीति उत्पन्न करता था।

चमूः समस्ता जडताङ्गता सकृत्, निवात—निष्कम्पमभूद्रणाङ्गणम्।
नभः स्थलाच्चङ्क्रमणं विधाय गां, यदा तरस्वी स जगर्ज वाजि-राट्॥

**अन्वय**—यदा स तरस्वी वाजिराट् स्थलात् नभः (पुनः) गां चंक्रमणं विधाय जगर्ज (तदा) समस्ता चमूः सकृत् जडतां गता रणाङ्गणम् निवातनिष्कम्पम् अभूत्।

धरती और गगन (भूमि पर चलते-चलते कभी ऊपर की ओर उछल पड़ता) तक विचरण करनेवाला वह तीव्रगामी अश्व जब गर्जन (हुँकार) करता उस समय समग्र एकबार-सेना जड़वत् स्थिर हो जाती एवं रणस्थल बवण्डर रहित और कम्पन-शून्य सा होने लगता।

य एव उद्ग्रीव—जनो रणेऽभवत् क्षणेऽभवद्धूलिमयो धरा—धृतः।
विदार्यं वक्षश्च तदीयमत्यहो! ययौ स मृत्योः समरेऽग्रदूतताम्॥

**अन्वय**—रणे यः एव उद्ग्रीवजनः अभवत् (सः) क्षणे धराधृतः धूलिमयः अभवत्। अत्यहो सः (चेतकः) समरे तदीयं वक्षः विदार्य मृत्योः अग्रदूतताम् च ययौ।

समरभूमि में जिस किसी भी विपक्षीजन ने सिर उठाया, वह क्षण भर में ही भूमि पर गिरकर धूलधूसरित हो गया, पुनः उसके वक्ष को विदीर्ण करके, वह चेतक उस समर में मृत्युदूत-सा प्रतीत हुआ।

स्फुरच्छटोऽनभ्र—तडित्प्रगर्जनः, महामद—भ्रान्त—विलोचनाञ्चलः।
प्रचण्ड—कण्डूतिमलं रणाङ्गतां, विनाशयामास सहास—चीत्कृतैः॥

**अन्वय**—स्फुरच्छटः अनभ्रतडित्प्रगर्जनः महामदभ्रान्तविलोचनाञ्चलः, (सः चेतकः) रणङ्गतां कण्डूतिं सहासचीत्कृतैः अलं विनाशयामास।

रण-मद में मतवाला वह चेतक (भ्रमित-सा होकर) चंचल आँखों से देखता हुआ गर्जन करता तो मेघ-रहित आकाश में बिजली की कड़क जैसी प्रतीति होने लगती, उसने युद्ध की प्रचण्ड खजुली को जैसे हँसते-हँसते विपक्षियों के चीत्कारों द्वारा विनष्ट कर डाला। अर्थ कि विपक्षि-जन की चीत्कार सुन पड़ती थी।

धुरन्धरेण ध्वनिनाऽऽप्रधर्षिणा, चञ्चञ्चलेनाऽऽचलनेन चारुणा।
विपक्ष—पक्ष—क्षतिकारिणाऽङ्घ्रिणा, स चेतकोभूद्युधि चेतकोपमः॥

अन्वय—धुरन्धरेण अप्रधर्षिणा ध्वनिना चारुणा चञ्चच्चलेन आचलनेन विपक्ष-पक्षक्षतिकारिणा अङ्घ्रिणा सः चेतकः युधि चेतकोपमः अभूत्।

आक्रान्त कर लेनेवाली धुरन्धर ध्वनि, चंचल होते हुए ( युद्ध-भूमि में तीव्र गति से सर्वत्र पहुँचने के कारण ) भी दृढ़ता के कारण विपक्षि-दल को हानि पहुंचाने-वाली क्रिया से वह चेतक युद्ध-स्थल में चेतक के समान दिखायी पड़ता था। ( अनुपम था )।

कथं न मन्ये किल तं मनोजवं, मनो-जवं म्लेच्छ-रणे समागतम्।
अधो न चोच्चैर्न पुरो न पृष्ठतः, ददर्श यं कोऽपि नरो न रोषिणम्॥

अन्वय—(अहो) किल म्लेच्छरणे समागतं मनोजवं तं मनो जवं कथं न मन्ये ? (किं यत्) कोऽपि नरः यं रोषिणम् अधः न, उच्चैः न पुरः पृष्ठतः च न ददर्श।

उसे क्यों न हनुमान् के समान मान लें जो अत्यन्त तीव्रगति ( मन के समान गति) से म्लेच्छों (यवनों) के इस युद्ध में उपस्थित है, क्रुद्ध जिस घोड़े को कोई भी आगे, पीछे, ऊपर-नीचे कहीं देख नहीं पाया। (इतनी तीव्र चाल थी कि उसे एक स्थान पर कोई देख नहीं पाता था )।

अहो! मदीया जड—लौह—लेखनी, कथा तदीया कथमत्र कथ्यताम्।
क्षणेन सा यच्छटया 'अरावली'—दरी दरीदृश्यत एकदाऽरुणा॥

अन्वय—अहो ! मदीया जडलौहलेखनी (अस्ति) अत्र तदीया कथा (तया) कथं कथ्यताम्। यच्छटया अरावली दरी क्षणेन एकदा अरुणा दरीदृश्यते।

अहो ! मेरी यह जड़ लौह लेखनी उसकी कीर्ति-कथा किस प्रकार कहे जिसकी छटा (आकृति) भर से अरावली की घाटी एक समय रक्तरंजित दिखायी देने लगी थी।



## प्रताप-विजयः

त्वं छिन्धि भिन्धि परिदारय ताडय त्वं त्वं, खण्डय ज्वलय कर्तय पातय त्वम्।
आदेशयन्ननुपदं विपदङ्कमूर्तिः, युद्धे प्रतापनृपतिर्द्रढिमोत्कटोऽभूत्।

अन्वय—त्वं छिन्धि, ( त्वं ) भिन्धि (त्वं) परिदारय त्वं ताडय, त्वं खण्डय, त्वं ज्वलय, (त्वं) कर्त्तव्य, त्वं पातय, (इति) अनुपदम् आदेशयन् विपदङ्कमूर्तिः प्रताप-नृपतिः युद्धे द्रढिमोत्कटोऽभूत् ।

महाराणाप्रताप युद्ध-क्षेत्र में अपने राजपूत-सैनिकों को—'दुश्मन के सैनिकों को छेद डालो, चीरफाड़कर, मारपीट कर समाप्त करो, इन्हें खण्ड-खण्ड कर डालो, काट-काट कर गिरा दो, अपनी क्रोधाग्नि की ज्वाला से भस्म कर दो, इस प्रकार का आदेश करते हुए समर-भूमि में पग-पग पर अडिग, निर्भीक एवं दृढ़ रहते ।

अश्वः क्वचित्पतति मर्दित-मुग्ध-मुण्डः, दन्ती क्वचिन्नदति कर्तित-दीर्घ-शुण्डः ।
एवं रिपून् स पशुमारममारयद्धा, बद्धाकृति-प्रकट-सङ्गर-सङ्गचण्डः ॥

अन्वय—क्वचित् मर्दित-मुग्ध-मुण्डः अश्वः पतति क्वचित् कर्तितदीर्घशुण्डः दन्ती नदति । हा, बद्धाकृतिप्रकटसङ्गरसङ्गचण्डः सः एवं रिपून् पशुमारम् अमारयत् ।

प्रतापसिंह व्यूह-रचना करके यवन-सेना के विरुद्ध विकट रूप हो प्रचण्ड युद्ध करते तो कहीं विपक्षी दल के घोड़े मर्दित मस्तक होकर गिर पड़ते, कहीं विशाल सूड़ों के खण्डित हो जाने से घायल हाथी कातर होकर चिग्घाड़ने लगते थे । इस प्रकार वीर प्रताप ने यवन-शत्रुओं को पशु के समान मार-मार-कर धराशायी कर दिया ।

खड्गेन खण्डयति कोऽपि विपक्षि-पक्षं, कश्चित्करोति कुटिलच्छुरिका-प्रहारम् ॥
कश्चिद् भिनत्ति किल सिंहनखेन कञ्चित्, कश्चित् कृपाणफलकेन खलं छिनत्ति ।

अन्वय—कोऽपि खड्गेन विपक्षिपक्षं खण्डयति, कश्चित्कुटिलच्छुरिकाप्रहारं करोति, कश्चित् सिंहनखेन कञ्चित् भिनत्ति, कश्चित् कृपाण-फलकेन खलं छिनत्ति किल ।

भयंकर युद्ध में कोई राजपूत वीर, शत्रु-सैनिक को खड्ग के प्रहार से काटता; कोई तीव्र धारवाले छुरे से प्रहार करता, कोई किसी को वघनखसे चीर देता एवं कोई कृपाण के फलक से दुष्ट यवन को छेद डालता ।

एवं महासमर—कर्म्मणि जायमाने, मानेरितं युधि सलीममलं स वीक्ष्य ।
सद्यः सचेतक-गतिः सविधे तदीये, सैन्यावलीं नृपतिरुल्ललयाञ्चकार ॥

अन्वय—एवं महासमर-कर्मणि जायमाने युधि मानेरितं सलीमम् अलं वीक्ष्य सचेतकगतिः सः नृपतिः सद्यः तदीयसविधे सैन्यावलीम् उल्ललयाञ्चकार ।

इस प्रकार युद्ध जब भीषण हो गया, उसी समय मानसिंह द्वारा प्रेरित उस समर-भूमि में सलीम को आया देखकर, तुरन्त प्रतापसिंह अपने घोड़े चेतक की वेग गति के साथ उसके समीप पहुँच गये एवं अपनी सेना को ललकारते हुए लड़ने के लिए उत्साहित करने लगे।

आयाहि रे! मुगलवंशकलङ्किसूनो! पूर्णोऽद्य मे भगवतः कृपयाऽभिलाषः।
दग्धो भव, प्रतप कोपकृशानुमध्ये, श्वासं गृहाण, नु सलीम! भुवि क्षणार्धम्॥

अन्वय—रे मुगलवंश-कलङ्किसूनो! आयाहि भगवतः कृपया मे अभिलाषः अद्य पूर्णः। (मम) कोपकृशानुमध्ये प्रतप, दग्धो भव। हे सलीम! भुवि क्षणार्धम् श्वासं गृहाण नु।

सलीम को सम्बोधित करके कहा—मुगल-कुल को कलंकित करनेवाले कुपुत्र! आ जा, मेरे भगवान् एकलिंग की कृपा से मेरी इच्छा आज पूर्ण हो गयी। तू इस युद्ध-भूमि में आ गया, ठीक है, मेरी क्रोधाग्नि में तू तपकर भस्म हो, तैयार हो जा, जब तक मैं भस्म नहीं कर देता, तू एक-आध क्षण इस धरती पर और जी ले।

यस्याः कृते न गणिता विकटाऽटवी सा सन्धाविताश्च शतशो बत शैल-खण्डाः।
स्वाधीनतामयि सुकुन्त! गृहाण तां त्वं, सद्योऽद्य नृत्तरत! कृत्तसलीम-मौलिः॥

अन्वय—यस्याः कृते सा विकटा अटवी न गणिता (तथा च) यस्या कृते शतशः शैलखण्डाः सन्धाविताः। बत अयि नृत्तरत सुकुन्त! अद्य सद्यः कृत्तसलीममौलिः त्वं सां स्वाधीनतां गृहाण।

इतना कहकर राणाप्रताप ने अपने प्रिय भाले को सम्बोधित कर कहा—जिसके लिए मैंने घोर और भयावह जंगलों की गणना नहीं की, (कुछ नहीं समझा) एवं सैकड़ों पर्वत-घाटियों में भ्रमण करता फिरा, वही स्वाधीनता इस क्षण समुपस्थित है, हे सुन्दर भाले! अब तुम तुरन्त ताण्डव नृत्य करते हुए सलीम का मस्तक काट डालो और स्वाधीनता को प्राप्त कर लो।

चक्राऽऽभ-वक्र-वदनः स विशालभालः, दोर्दण्ड-चण्ड-परिचालित-शस्त्रजालः।
निक्षिप्तवान् प्रहत-मोगल-सैन्य-मल्लं, भल्लं नृपाऽकंबर-सूनु-सलीम-मौलौ॥

अन्वय—चक्राऽऽभ-वक्र-वदनः विशालभालः दोर्दण्डचण्डपरिचालितशस्त्रजालः सः प्रहतमोगलसैन्यमल्लं भल्लं नृपाकंबरसूनु-सलीम मौलौ निक्षिप्तवान्।

उन्नत विशाल ललाट, उद्दीप्त आनन महाराणाप्रताप अपने मुख को चक्र के सदृश घुमाते हुए, अपने प्रचण्ड बाहुदण्ड द्वारा शस्त्र-समूह का परिचालन करनेवाले वीरवर ने मुगल सेना के श्रेष्ठ वीरों का वध करनेवाले अपने प्रिय भाले को सम्राट् अकबर के पुत्र सलीम के मस्तक पर फेंक कर मारा।

जातः प्रताप-विहितो नहि कुन्त–घातः–युद्धेऽशनेः समभवन्नु निरभ्र–पातः।
आम्रेडितं सकल-दिग्वलये तदाऽभूत्, हा हा सलीम ! नर-भीम ! कुलैक-तात !।

अन्वय—प्रतापविहितः कुन्तघातः नहि जातः। परन्तु युद्धे अशनेः निरभ्रपातः समभवन्नु तदा सकलदिग्वलये—हा हा सलीम ! नरभीम ! कुलैकतात इति आम्रेडितम् अभूत्।

महाराणाप्रताप द्वारा किया गया वह भाले का आक्रमण नहीं रह गया, बल्कि उस प्रहार से ऐसा प्रतीत हुआ मानो बादल-रहित आकाश से उस युद्धभूमि में बिजली गिर पड़ी हो वज्रपात-सा हो गया एवं हा ! हा ! ! सलीम, बलशाली वीर, मुगल सम्राट् की एक मात्र सन्तान ! यह कौन-सा तुम्हारे ऊपर वज्र गिर पड़ा ! ध्वनि से दिशाओं में हाहाकार मच गया।

स्तब्धं बभूव गगनं, चकिता धरित्री, यच्चेतकेन कटितः स सलीम–हस्ती।
दिष्ट्या करीन्द्र-कृतपूर्ण-पलायनेन प्राणानहो ! यवनराड् न जहौ स्व-भाग्यात्॥

अन्वय—यत् चेतकेन सः सलीम हस्ती कटितः। (ततः) गगनं स्तब्धं धरित्री च चकिता बभूव। अहो दिष्ट्या यवनराट् स्वभाग्यात् करीन्द्रकृत-पूर्णपलायनेन प्राणान्-न जहौ।

चेतक ने जब सलीम के हाथी पर आक्रमण किया और भाले के आघात से वह घायल हुआ तो गगन स्तब्ध तथा धरती आश्चर्यचकित हो गयी। सलीम का हाथी भयातुर हो रणभूमि से भाग चला, परिणामतः वह यवनश्रेष्ठ मारा न जा सका, भाग्य से उसके प्राण बच गये।

तावत्स—शस्त्र–यवनाः परितः प्रचेलुः, राणाऽपनोदनकृते युगपत्समस्ताः।
सोऽपि क्षणाय विनिमीलित–लोचनोऽभूत्, सूर्यो यथा सजलसज्जलदप्रपञ्चे॥

अन्वय—तावत् राणाऽपनोदनकृते परितः समस्ताः सशस्त्रयवनाः युगपत् प्रचेलुः। सजलसज्जलदप्रपञ्चे सूर्यः यथा सोऽपि क्षणाय विनिमीलितलोचनः अभूत्।

तव तक राणाप्रताप को मार डालने की इच्छा से चारों ओर से एक साथ ही यवन सैनिकों ने उन पर आक्रमण करने के लिए घेर लिया, उस स्थिति में प्रताप भी क्षण भर के लिए आँखें वन्द-सी कर स्थिर हो गये, उसी प्रकार जैसे जलपूर्ण-वादलों से आच्छादित हो जाने पर सूर्य एक क्षण के लिए मन्द ज्योति हो जाता है।

एवं प्रतापमपि वीक्ष्य रणे स-तापं, टङ्कारितं प्रतिविधाय महोग्र–चापम्।
राणा-शिरो-मुकुटमात्म-गतं च 'झाला माना' विधाय यवनाऽऽहनने प्रसक्तः॥

अन्वय—रणे प्रतापमपि एवं सतापं वीक्ष्य, महोग्रचापं टङ्कारितं प्रतिविधाय। राणाशिरोमुकुटम् आत्मगतं च विधाय झालामाना यवनाऽऽहनने प्रसक्तः (अभवत्)।

इस प्रकार समरभूमि में राणाप्रताप को सन्तप्त देखकर, प्रतिकार करने की इच्छा से अपने प्रचण्ड धनुष का टंकार किया और प्रताप के सिर पर शोभित मुकुट को अपने मस्तक पर धारण करके, झालामाना ने सेना का संहार प्रारम्भ कर दिया।

राणाऽऽकृतिञ्च तमवेक्ष्य सलीम-सेना, रोषोत्कटा कृतवती कठिनं प्रहारम्।
यस्माच्चतुर्दशसहस्र-रघुप्रवीरा, जग्मुः–'स्वदेश'–ममतोचित–दिव्यलोकान्॥

अन्वय–रोषोत्कटा सलीमसेना राणाऽऽकृतिं तम् अवेक्ष्य कठिनं प्रहारम् कृतवती यस्मात् चतुर्दशसहस्र–रघुप्रवीराः स्वदेशममतोचितदिव्यलोकान् जग्मुः।

राणा प्रताप की आकृति एवं वेषभूषा में उसे देखकर सलीम की सेना ने सक्रोध उस पर ही तीक्ष्ण प्रहार किया, जिस कारण चौदह हजार रघुवंश क्षत्रिय वीर स्वदेश की ममता में उसकी रक्षा में रत रहकर स्वर्गलोक को प्राप्त हो गये।

त्यक्त्वा रणं नृपवरो न जगाम यावत् काञ्चिद्दशां कविमतिः स्थगिता नु तावत्।
वृत्तं कथङ्कथमपि प्रकटं प्रवक्तुं, नाऽग्रे क्षमा हत-बला बत लेखनीयम्॥

अन्वय—यावत् नृपवरः रणं त्यक्त्वा काञ्चिद् दशां न जगाम, तावत् कविमतिः स्थगिता नु बत, हतबला इयं लेखनी अग्रे कथङ्कथमपि वृत्तं प्रकटं प्रवक्तुं न क्षमा।

उस भीषण रण-क्षेत्र से निकल कर महाराणा प्रताप किसी सुरक्षित स्थान में जब तक नही पहुंच गये, तब-तक कवि की प्रतिभा-कल्पना भी स्थगित होकर कुण्ठित पड़ गयी, एवं युद्ध का और स्पष्ट वर्णन करने में बेचारी यह लेखनी भी आगे समर्थ नहीं रही।

●

## हल्दीघाटी-परिचयः

स्वाधीनताऽऽर्यभुवि मूर्तिमती स-माना, राणाप्रताप—बलवीर्यविभासमाना।
आटीकते समुपमा नहि यां सुशोचिः, शाटीव सा जयति काचन हल्दिघाटी ॥

अन्वय—आर्यभुवि यां समुपमा सुशोचिः नहि आटीकते, स माना शाटीव राणाप्रताप-बलवीर्यविभासमाना, मूर्तिमती स्वाधीनता सा काचन हल्दिघाटी जयति।

आर्यभूमि के लिए सम्माननीया मूर्तिमत स्वाधीनता-सी जहाँ राणाप्रताप का शौर्य एवं गौरव प्रतिबिम्बित-सा प्रकाशित है, जिसके समान कोई उपमा (प्रयास करने पर भी ) नहीं सोच पाता, वह हल्दीघाटी शाटी (साड़ी) के समान विजयिनी हो। (उस शाटी की सुन्दरता का वर्णन आगे देखें—)

प्राची यदा हसति हे प्रिय ! मन्दमन्दं, वायुर्यदा वहति नन्दनजं मरन्दम्।
या प्रत्यहं किल तदा मतिमाननीयां शोभां दधात्युषसि काञ्चन काञ्चनीयाम् ॥

अन्वय—हे प्रिय ! प्राची यदा मन्दमन्दं हसति वायुः यदा नन्दनजं मरन्दं वहति, तदा या प्रत्यहम् उषसि मतिमाननीयां काञ्चनीयां काञ्चन शोभां दधाति किल।

हे प्रिय ! पूर्व दिशा जब मन्द-मन्द हास बिखेरती है (उषा से पूर्व दिशा शोभित होती है) वायु नन्दनवन का सौरभ लेकर चलता हैं, तब जो माननीया उषा वेला में किसी स्वर्णवर्णा युवती की शोभा धारण कर लेती है।

'हाहा कृतां पुनरलं हननैमृ'तानां, यूनां महाबलवतां नु परश्शतानाम्।
संस्मृत्य शौर्य-भरितं चरितं पुराणं, मूकाऽस्त्यसौ किमिति विज्ञ-जन-प्रमाणम् ॥

अन्वय—असौ (हल्दीघाटी) पुनः अलं हननैः 'हाहा' कृतां मृतानां परश्शतानां महाबलवतां यूनां शौर्यभरितं पुराणं चरितं संस्मृत्य मूका अस्ति। किमिति ( अत्र ) विज्ञजनः प्रमाणं नु।

महाबलशाली तुम लोगों (राजपूतों) द्वारा शतशः शत्रु-जनों का वध किये जाने से उन मृतजनों को 'हा हा' (आह भरी) ध्वनि हुआ करती थी। उस प्राचीन शौर्यपूर्ण चरित का स्मरण कर यह स्थली क्या मूक है ? अस्तु, विज्ञजन ( इतिहासवेता ) ही इसके प्रमाण हैं।

आस्ते प्रताप इह भारत-भूमि-वीरः, हे पान्थ ! हिन्दुरसि चेत्सकृदानतः स्याः ।
सम्प्रत्यपि प्रतिवदन्निव किन्नु धीरं, धीरं ह्यधीरयति धीर-जनं समीरः ॥

अन्वय--हे पान्थ ! इह भारतभूमिवीरः प्रतापः आस्ते, (त्वं) हिन्दुः असि चेत् सकृत् आनतः स्याः । किन्नु सम्प्रत्यपि समीरः धीरं प्रतिवदन्निव धीरजनं धीरं अधीरयति हि ।

हे पथिक ! यहीं भारत भूमि का यशस्वी वीरप्रताप रहा, यदि हिन्दू हो तो उसे एक वार नमन कर; इस समय भी वायु धीरता धारण कर प्रति-ध्वनि (उसी वाणी की अनुगूँज ) करता हुआ ( सचेत-सा करता ) धीर-पुरुषों को अधीर बनाता है ।

मा कातराः!स्पृशत मां प्रिय पारतन्त्र्याः! अद्यापि यन्न विहिता जननी स्वतन्त्रा ।
यत्रेदमेव गदतीव ततिस्तरूणां, शाखाकदम्ब—कृत—मर्मरमातनोति ॥

अन्वय—हे कातराः ! हे प्रियपारतन्त्र्याः मां मा स्पृशत । यत् (युष्माभिः) अद्यापि जननी स्वतन्त्रा न विहिता । यत्र तरूणां ततिः इदमेव गदति इव शाखाकदम्ब-कृतमर्मरम् आतनोति ।

परतन्त्रता के उपासक अरे कायरों ! मेरा स्पर्श न करो, जिसने आज भी जन्म भूमि को स्वतन्त्रता नहीं प्राप्त करायी, जहाँ वृक्षों की पंक्तियाँ शाखा-समूहों द्वारा मर्मर ध्वनि करती इसी प्रकार कहती रहती हैं ।

वीराग्रणीरभय-युद्ध-कलाकलापी, क्वाऽऽस्तेऽद्य हा ! स तनयः सनयः प्रतापी ।
अत्रत्य-निर्जनवनेऽथ यदा कदाचिद् मातेव रोदिति सखे ! कुररी नु काचित् ॥

अन्वय—हे सखे ! अत्रत्यनिर्जनवने यदा कदाचित् काचित् कुररी माता इव रोदिति हा ! वीराग्रणीः अभययुद्धकलाकलापी सनयः प्रतापी सः तनयः अद्य क्व अस्ति ।

वीरों में श्रेष्ठ, निर्भीक और युद्ध की समस्त कलाओं में निपुण, हाय ! नीतिमान् वह पुत्र प्रताप आज कहाँ है, सखे ! यहाँ वन में इस प्रकार जब कभी माता के समान (यह हल्दीघाटी बिलपती है,) जैसे कोई क्रौंच पक्षी रोता हो ।

अद्यापि यत्र जननी मम हन्त'राणा'-'राणा' विरौति विकला नु 'कुहू' च्छलेन ।
अद्यापि धारयति नैव कदापि शोभां, नूनञ्च तद्विरहिणी प्रकृतिर्वधूटी ॥

अन्वय—हन्त, यत्र अद्यापि मम विकला जननी कुहूच्छलेन 'राणा-'राणा' विरौति नु । नूनं तद्विरहिणी वधूटी प्रकृतिः कदापि शोभां नैव धारयति च ।

आज भी जहाँ कोकिल के 'कुहू' स्वर में 'राणा' 'राणा' पुकारकर विकलमन जन्मभूमि विलपती, जहाँ प्रकृतिरूपी तरुणी आज भी उसके विरह के कारण शोभा धारण करना त्याग रही है, यह वही स्थल है।

अद्यापि यत्र सुमधुव्रत-झंकृतानि, लोलाक्ष-खञ्जनजनाञ्चित-नर्तनानि।
सत्कूजितान्यनुदिनं शुक—शावकानां तौर्यत्रिकं जयति किञ्चन देवतानाम्॥

अन्वय—यत्र अद्यापि सुमधुव्रतझङ्कृतानि, लोलाक्ष-खञ्जनऽजनाञ्चित-नर्त्तनानि शुकशावकानां सत्कूजितानि अनुदिनं देवतानां किञ्चन तौर्यत्रिकं जयति।

जहाँ आज भी भौंरों के मधुर झंकार चंचल नेत्रोंवाले खञ्जन पक्षियों के नर्तन (उछल-कूद) एवं शुक के बच्चों द्वारा किये गये मनोहर कूजन से प्रतिदिन जैसे तूर्य स्वर करके किसी देवता का पूजन हुआ करता है।

पुष्पं फलं तदनु गन्धवहः समीरः, खद्योत-पंक्तिरमला च पिकालि—गीतिः।
अद्यापि यत्र सरल—प्रकृति—प्रणीतं, पञ्चोपचारमिव पूजनमस्ति मातुः॥

अन्वय—यत्र अद्यापि सरलप्रकृतिप्रणीतं-पुष्पं फलं गन्धवहः समीरः अमला खद्योतपंक्तिः तदनु पिकालिगीतिः मातुः च पञ्चोपचारं पूजनमिव अस्ति।

जहाँ आज भी फल और फूल, सुगन्ध को धारण कर चलनेवाला पवन, खद्योत-समूह एवं कोकिल-वृन्द का कलगान आदि सुन्दर प्रकृति द्वारा निर्मित जन्मभूमि का पंचोपचार पूजन-विधान है।

नीलेन पक्ष-निवहेन खमाहसन्तः, चञ्च्वा फलानि विमलानि समञ्चयन्तः।
'श्रीराम' नाम मधुरं मधुरं क्वणन्तः, अद्यापि यत्र सुशुका विलसन्ति सन्तः॥

अन्वय—यत्र नीलेन पक्षनिवहेन खम् आहसन्त चञ्च्वा विमलानि फलानि समञ्चयन्तः श्रीराम-नाम मधुरं मधुरं क्वणन्तः सन्तः सुशुकाः अद्यापि विलसन्ति।

नीलवर्ण पक्ष समूह से आकाश को हँसाते (विचरण द्वारा शोभित करते) हुए चञ्चु में सुन्दर फल धारण करनेवाले 'श्रीराम' नाम का मधुर-स्वर में कूजन करते हुए, आज भी जहाँ सुन्दर तोते दिखलायी पड़ रहे हैं।

वीक्ष्य प्रभा—हसित—चारु—पुरन्दराणां, सङ्गं स नृत्यममलं शिखिसुन्दराणां।
सम्भासते वनभुवः सुषमात्युदारः, हर्षाङ्कितो हरित-हीरक-कण्ठहारः॥

अन्वय—वनभुवः सुषमात्युदारः हर्षाङ्कितः स हरितहीरककण्ठहारः प्रभाहसित चारुपुरन्दराणां शिखिसुन्दराणां अमलं नृत्यं सङ्गं (च) वीक्ष्य सम्भासते।

वर्षाऋतु में बादलों के मध्य इन्द्र धनुष की सुन्दर छटा एवं सुभग मयूरों के साथ में मनोहर नृत्य देखकर वनस्थली हरित-हीरक कण्ठहार ( हरित तृणराशि तथा पादपावली रूपी हरितवर्ण हीरे का हार ) धारण किये हर्षित हृदय अत्यन्त उदार सौन्दर्य से चमक उठती है।

चूड़ामणिः सकलभारत-भामिनीनां, पत्नी प्रतापनृपतेरमलाऽत्र शैले।
प्राण-प्रदानमकरोत् पतिपादपद्मे, किन्त्वेकबारमपि हा ! नहि हाऽकरोत्सा ॥

अन्वय—अत्र शैले सकलभारतभामिनीनां चूड़ामणिः प्रतापनृपतेः अमला पत्नी पतिपादपद्मे प्राण-प्रदानम् अकरोत्। किन्तु हा ! सा एकवारम् अपि हा नहि अकरोत्।

भारतवर्ष की समस्त स्त्रियों में श्रेष्ठ नृपति प्रताप की पत्नी ने इस पवित्र पर्वत पर, पति चरण-कमलों में अपने प्राण समर्पित कर दिया परन्तु एक बार भी उसके मुँह से 'हा' शब्द नहीं निकला।

अत्रप्रतापनृपतेः प्रकट-प्रतापा, एकाऽपि हन्त ! शतधाऽभवदस्त्र—धारा।
युद्धेऽधिकोशमपि शत्रुवधे क्रमेण, ज्योत्स्ना तमः सहचरी चपलेति चित्रम् ॥

अन्वय—हन्त ! अत्र प्रतापनृपतेः प्रकट-प्रतापा एका अपि अस्त्रधारा शतधा अभवत्। ( परन्तु ) युद्धे अधिकोशम् ज्योत्स्नातमः सहचरी। ( अस्त्रधारा ) शत्रुवधे क्रमेण चपला (अभवत्) इति चित्रम्।

यह वही स्थान है, जहाँ नृपति प्रताप (महाराणा प्रताप) का वह प्रताप (धैर्य) प्रकट हुआ कि शत्रुओं का क्रमशः वध करने के क्रम (कार्य में) में एकाकी कोशशायिनी (म्यान में पड़ी) तलवार शतशः रूपों में चमक उठी थी। (मानो सैकड़ों धाराएँ फूट पड़ी हों) अद्भूत दृश्य था वह, परन्तु नहीं; अन्धकार की संगिनी चाँदनी (ज्योति) क्या चपला में नहीं दीप्त होती ? ( विद्युत् की कड़क के साथ जो प्रकाश फूटता है, उसमें प्रकाश-रेखाएँ सी मालूम पड़ती हैं।)

अत्रैव वीरजनमौलिमहार्हतरत्नं, धीराग्रणीरगणि व्रणवान् स 'झाला'।
राणाऽर्थमेव हहहा ! समरेऽसहायः प्राणाञ्जहौ न तु पलायनतत्परोऽभूत् ॥

अन्वय—हहहा ! अत्रैव समरे असहायः वीरजनमौलिमहार्हरत्नं धीराग्रणीः अगणितव्रणवान् स 'झाला' राणार्थम् प्राणान् जहौ एव, (परं) तु पलायतत्परः न अभूत्।

यहीं वीरों के मस्तक पर बहुमूल्य रत्नरूपी ( वीरों में श्रेष्ठ ) धीरजनों में प्रमुख (अगुआ) अनेक आघात सहकर उस झाला ने राणाप्रताप के लिए युद्ध में असहाय बनकर प्राण त्याग दिया, भागकर रक्षा नही की।

लोकत्रयेऽतिविदिता बलिवेदिकेयं, यत्र प्रतापनृपतेरनुयायिवर्गः।
सङ्क्रीतवान् किल परश्शतमौलिदानात् स्वातन्त्र्यमार्यवर-वीर वसुन्धरायाः॥

अन्वय—इयं बलिवेदिका लोकत्रये अतिविदिता यत्र प्रतापनृपतेः अनुयायिवर्गः परश्शतमौलिदानात् आर्यवरवीरवसुन्धरायाः स्वातन्त्र्यं सङ्क्रीतवान् किल।

तीनों लोकों में यह अति प्रसिद्ध बलिवेदिका है जहाँ प्रतापसिंह के अनुयायिजनों ने (पूर्वजों) की वीर-भूमि को स्वाधीन करने के लिए शतशः सिरों का दान करदिया एवं यशभागी बने।

वीराश्चतुर्दशसहस्रमिता इहैव, मृत्युं यथा शयन—तूलमथाऽलिलिङ्गुः।
किन्तु प्रशस्यतमशस्यमहीयसीं स्वां सन्मातरं नहि मनाग् विजहुर्धरित्रीम्॥

अन्वय—अथ चतुर्दशसहस्रमिताः वीराः इहैव शयनतूलं यथा मृत्युम् आलिलिङ्गुः किन्तु प्रशस्यतमशस्यमहीयसीं स्वां सन्मातरं धरित्रीं मनाग् (अपि) नहि विजहुः।

यहाँ के चौदह हजार राजपूतवीरों ने मृत्यु को कोमल शय्या के समान मानकर आलिंगन कर लिया परन्तु धन-धान्य पूर्ण महिमाशालिनी अपनी माता के समान भूमि (जन्मभूमि) को रंचमात्र भी नहीं छोड़ा।

अत्रैव वीरजन—शोणित—शोण—गङ्गा, भूत्वा सहस्रपथगा गतिमाततान।
यद्दर्शनेन रसनेन च मज्जनेन, देवैः सहैव ऋषयः पितरोऽपि तृप्ताः॥

अन्वय—अत्रैव वीरजनशोणितशोणगङ्गा सहस्रपथगा भूत्वा गतिम् आततान, यद् दर्शनेन, रसनेन; मज्जनेन देवैः सह ऋषयः पितरः अपि तृप्ताः एव।

इसी स्थान पर वीरों के रक्त से लोहित गंगा सहस्त्रधारों में होकर गतिमान् हुई, (बहने लगी थी) एवं जिसका दर्शन करने, जिसकी कथा सुन रसानन्द लेने और जिसमें स्नान करने (गौरव का अनुभव करने) से देवताओं के साथ ही ऋषिगण तथा पितर भी संतुष्ट हो गए।

सैषा स्थली चकित-चेतक-चङ्क्रमाणां, सैषा स्थली कुटिल-कुन्त-पराक्रमाणां।
सैषा स्थली प्रियतमाऽप्यसुतोऽमराणां, सैषा स्थली भयकरी नर-पामराणाम्॥

अन्वय—सा एषा चकित-चेतक-चङ्क्रमाणां स्थली, सा एषा कुटिलकुन्तपराक्रमाणां स्थली, सा एषा स्थली अमराणाम् असुतः अपि प्रियतमा, सा एषा स्थली नरपामराणां भयकरी।

यह वह स्थान है जहाँ विपक्षियों को अचम्भित करते हुए चेतक विचरा, यह वही स्थान है, जहाँ भीषण भाले का पराक्रम बिखरा. यह वही स्थान है जो प्राण से भी (अधिक) देवगणों को भी प्रिय है, और यह वह स्थान है जो कायर जनों के लिए भयकारी है।

## परिशिष्ठम्

### कवि-वंश-वृत्तम्

अथाजमेत्यन्वित—सद्गढ़ाश्रिता, प्रभारताऽस्त्युत्तर-भारते पुरी।
गुणाभिरामा प्रकृति-प्रशोभिता, स 'मुद्गमाष' प्रथिता जनस्थली ॥

उत्तर भारत में 'आजम' शब्द से युक्त और सुन्दर 'गढ़' शब्द पर आश्रित पुरी (आजमगढ़) है। वहीं गुणों से सुन्दर, प्राकृतिक दृश्यों से शोभित प्रसिद्ध मुद्गमाष (माष) मूँग नामक जनस्थली (ग्राम) है।

महर्षि-शाण्डिल्य पवित्र-वंशजाः, द्विजोत्तमास्तत्र वसन्ति सन्ततम्।
चरित्रवन्तः कृत-धर्म-निर्णयाः, सदैव वेदोचितकर्मकारकाः ॥

जहाँ महर्षि शाण्डिल्य के पवित्र वंशवाले उत्तमब्राह्मण, सदैव वेद-विहित कर्म-करनेवाले, सच्चरित्र और धर्मादि का निर्णय करते हुए निवास करते हैं।

अभूत्पुरा तत्र नवीन-मण्डनः, बुधोत्तमैः साधु-कृताभिवन्दनः।
सदस्सु वाचस्पति-पङ्क्ति-बन्धनः, महामना पण्डित-रत्न 'बन्धनः' ॥

उस गाँव में मण्डन मिश्र के नवीन अवतार के समान, उत्तम विद्वानों द्वारा अभिवन्दित, सभाओं में वाचस्पति पंक्ति में गिने जानेवाले महामना और पण्डितों में रत्न-सदृश 'बन्धन' नामधारी हुए।

ततः प्रजातस्तत एव सर्वथा, सुपारिजातो निज-वंश-कानने।
अजातशत्रुर्नव एव भूतलेऽस्मदीयतातः प्रणिपात=पूजितः ॥

वहीं अपने वंश रूपी नन्दन-वन में कल्पवृक्ष सदृश, धरती पर अजातशत्रु के अवतार-स्वरूप प्रणामादि से पूजित हमारे पूज्य पिताजी उत्पन्न हुए।

अभूत्स कीर्त्याऽतितरां विचक्षण-श्रुतोऽम्बिकादत्तबुधो विलक्षणः।
पुपोष यं श्रीशरदिन्दु-सुन्दरी सरस्वती सा स्वत एव जन्मतः ॥

विद्वानों में यशस्वी, अत्यन्त विलक्षण कीर्तिवाले प्रसिद्ध 'अम्बिकादत्त' नामधारी थे, जो शरद्कालीन चन्द्रमा के समान सरस्वती द्वारा स्वयं जन्म से ही पोषित हुए।

यदीय-शिष्याः प्रथिताः सुधारकाः, सदा सदाचार-विचार-कारकाः।
समस्तशास्त्रे पटवो भुवस्तले, प्रशस्तबोधा वटवः पदे—पदे॥

जिनकी शिष्यमण्डली सुधारक, सदा सुन्दर आचार-विचार से युक्त, समस्त शास्त्रों में निपुण धरतीतल पर सम्यक् ज्ञानवाली प्रसिद्ध थी।

सुदेवराज्ञीति तदीय–भामिनी, समुज्ज्वलत्काञ्चन-कान्ति-हारिणी।
महाकवेर्लक्षण–पुञ्जतोऽञ्चितं शचीव लेभे तनयं नयङ्गतम्॥

तप्त स्वर्ण की कान्ति को हरणकरनेवाली, शची के समान उसकी 'देवराज्ञी' नामक पत्नी ने महाकवि के लक्षणों से युक्त नीतिमान् पुत्र को प्राप्ति की।

स्वशैशवेऽनन्तदिगन्त विश्रुतो, य एकलो भारत-भारती-पतिः॥
नवावतारो भुवि दण्डिनोऽथवा, नृमूर्तिमान् सुन्दरकाव्यविग्रह॥

वह अपने बाल्यकाल में ही दिग्-दिगन्त में प्रसिद्ध, भारत की सरस्वती (वाणी) का एकमात्र पति (पोषक) जो धरती पर महाकवि दण्डी का नया अवतार—सदृश अथवा सुन्दर काव्य ने ही मानवरूप धारण कर लिया है!

स 'ईशदत्तः' कविरीशदत्त-धी-रधीत–शब्दप्रमुखागमान्वयः।
सरस्वतीं स्वां सरसां सदा स्मरन्नरीरचत्काव्यमदो मदोन्नतम्॥

भगवत्प्रदत्त बुद्धि-सनाथ व्याकरणादि शास्त्रों का अध्ययन करनेवाले उस 'ईशदत्त' कवि ने रसवर्षिणी अपनी सरस्वती का स्मरण करते हुए ओजभरे इस काव्य ग्रन्थ की रचना कर दी।

## विदुषां सम्मतयः

●

'प्रतापविजय' काव्यं सर्वेषां न प्रमोदमुत्पादयति। अस्य काव्यस्य रचयितारः श्रीमन्त ईशदत्तशास्त्रिणः 'सुप्रभातसम्पादकाः' काव्यरसिकानां हार्दिकमनुवादमर्हन्ति ।

स्व० महामहोपाध्यायः श्रीगङ्गानाथझा शर्मा

●

'प्रतापविजय' नामकेन संस्कृतपद्यैरारचितेन खण्डकाव्येन प्रसाद्यमानमानसा न्धारमभिनन्दयन्तः सर्वेपथीनेदमीयालकर्मीणतां जगदीश्वरात् प्रार्थयन्तेतमामिति शम् ।

स्व० श्रीमाध्वसंप्रदाचार्यश्रीदामोदरगोस्वामिशास्त्रिणः

●

नवावतारमिव महाभारतस्य, प्रसादसर्वस्वमिव पौलत्यवधस्य, हेवाकनिकषोपलमिव वीररसस्य, पुनर्जननमिव वेणीसंहारस्य, व्यररचत् प्रतापविजयाभिधानं खण्डकाव्यं राष्ट्रियतैकशेवधिः ईशदत्तः सुधीः ।

स्व सर्वतन्त्रस्वतन्त्रः श्रीमहादेवशास्त्री

[ पूर्वप्रधानाचार्यः ओरियन्टलकालेज,
हिन्दूविश्वविद्यालयः वाराणसी ]

●

कविरयं स्वाभाविकः सिद्धसारस्वतश्च । अस्य हृदये शैशवादेव कवित्वबीजरूपसंस्कारविशेषः शक्तिः जाजागरीति चिरकालादेवलोकयामः । ··· साम्प्रतं युगे यादृशीनां कवितानामावश्यकता वरीवर्त्ति तादृशी कविता 'श्रीश' कवेः नरपामराणां हृदयान्यपि वीररसाप्लुतानि चरीकरीति । ·· मन्यामहे स कवि तं काव्यरत्नञ्च शिरोभूषायमाणं कुर्वन्तः···गुणज्ञतामाविष्करिष्य

स्व० श्रीकेदारनाथ

[ 'सुप्रभात' प्रधानसम

●